ॐ अर्हम्.

न्यायविशारद-न्यायाचार्य-श्रीमद्यशोविजयोपाध्याय-

विरचिता स्वोपज्ञविवरणयुता

# धर्मपरीक्षा.

वळावास्तव्य-श्रावकहर्षचंद्रात्मज-पंडितभगवानदासेन

संशोधिता

श्रीमदाचार्यविजयनीतिसूरिप्रबोधित-भावसार 'मुगटराम उमेदभाइ' इत्येतस्य द्रव्यसाहाय्येन 'पाटण श्रीहेमचंद्राचार्यसभाया माननीयकार्यवाहक-जगजीवनदास उत्तमचंद्र' इत्यनेन

प्रकाशिता च.



अमदावाद-टंकशालासमीपस्थ-युनीयनमुद्रणालये तदधिपतिना मोहनलाल चीमनलाल इत्यनेन मुद्रिता.

संवत्. १९७८. खिस्ताब्द. १९२२.

प्रत ५००.

# विषयानुक्रमः



## प्रमाणत्वेनोद्धृतग्रन्थनामानि।

## ग्रन्थकारनामानि.



## प्रमाणत्वेनो [illegible]तानि अनिर्दिष्टग्रन्थप्रतीकानि.

अर्हम्

न्यायाचार्यश्रीमद्यशोविजयोपाध्यायविरचिता
स्वोपज्ञवृत्तिसंवलिता

# धर्मपरीक्षा.

ऐं नमः

ऐन्द्रश्रेणिकिरीटकोटिरनिशं यत्पादपद्मद्वये
हंसालिश्रियमादधाति न च यो दोषैः कदापीक्षितः ।
यद्वाचः कल्पलता शुभाशयभुवः सर्वप्रवादस्थिते-
र्ज्ञानं यस्य च निर्मलं स जयति त्रैलोक्यनाथो जिनः ॥१॥
यन्नाममात्रस्मरणाज्जनानां प्रत्यूहकोटिः प्रलयं प्रयाति ।
अचिन्त्यचिन्तामणिकल्पमेनं शङ्खेश्वरस्वामिनमाश्रयामः ॥२॥
नत्वा जिनान् गणधरान् गिरं जैनीं गुरूनपि ।
स्वोपज्ञां विविदं धर्मपरीक्षां विवृणोम्यहम् ॥३॥

इह हि सर्वज्ञोपज्ञे प्रवचने प्रविततनयभङ्गप्रमाणगंभीरे परममाध्यस्थ्यपवित्रितैः श्रीसिद्धसेन–हरिभद्रप्रभृतिसूरिभिर्विशदीकृतेऽपि दुःषमादोषानुभावतः केषांचिद् दुर्विदग्धोपदेशविप्रतारितानां भूयः शङ्कोदयः प्रादुर्भवतीति तन्निरासेन तन्मनोनैर्मल्यमाधातुं धर्मपरीक्षा नामायं ग्रन्थः प्रारभ्यते, तस्य चेयमादिगाथा—

पणमिय पासजिणिंदं धम्मपरिक्खाविहिं पवक्खामि।
गुरुपरिवाडीसुद्धं आगमजुत्तीहिं अविरुद्धं ॥ १ ॥

---

प्रणम्य पार्श्वजिनेन्द्रं धर्मपरीक्षाविधिं प्रवक्ष्ये ।
गुरुपरिपाटीशुद्धं आगमयुक्तिभ्यामविरुद्धम् ॥

पणमियत्ति। प्रणम्य–प्रकर्षेण भक्तिश्रद्धाऽतिशयलक्षणेन नत्वा पार्श्वजिनेन्द्रम्, अनेन प्रारिप्सितप्रतिबन्धकदुरितनिरासार्थं शिष्टाचारपरिपालनार्थं च मङ्गलमाचरितम्। धर्मस्य धर्मत्वेनाभ्युपगतस्य, परीक्षाविधिम्–अयमित्थंभूतोऽनित्थंभूतो वेति विशेषानेद्धरणप्रकारं प्रवक्ष्ये। प्रेक्षावत्प्रवृत्त्युपयोगिविषयाभिधानप्रतिज्ञेयम्। प्रयोजनादयस्तु सामर्थ्यगम्याः, धर्मप्रतिपादकस्यास्य ग्रन्थस्य धर्मशास्त्रप्रयोजनादिभिरेव प्रयोजनादिमत्त्वादिति। किंभूतं धर्मपरीक्षाविधिम्? गुरुपरिपाटीशुद्धम्–अविच्छिन्नपूर्वाचार्यपरम्परावचनानुसरणपवित्रम्, तथाऽऽगमयुक्तिभ्यां–सिद्धान्ततर्काभ्यामविरुद्धमबाधितार्थम्। एतेनाभिनिवेशमूलकस्वकपोलकल्पनाशङ्का परिहृता भवति। इयं हि ज्ञानांशदुर्विदग्धानामैहिकार्थमात्रलुब्धानां महतेऽनर्थाय। यावानेव ह्यर्थः सुनिश्चितस्तावानेवानेन निरूपणीयः, न तु कल्पनामात्रेण यत्तदसंबद्धप्रलापो विधेय इति मध्यस्थाः। अत एव चिरप्ररूढमप्यर्थं कल्पनादोषभीरवो नाहत्य दूषयन्ति गीतार्थाः।

तदुक्तं धर्मरत्नप्रकरणे—

जं च ण सुत्तेहिं विहियं णय पडिसिद्धं जणंमि चिररूढं।
समइविगप्पिअदोसा तंपि ण दूसंति गियत्था॥

ततश्च माध्यस्थमेव धर्मपरीक्षायां प्रधानं कारणमिति फलितम्॥१॥

एतदेव आह—

**सो धम्मो जो जीवं धारेइ भवण्णवे निवडमाणं।**
**तस्स परिक्खामूलं मज्झत्थत्तं चिय जिणुत्तं॥२॥**

सो धम्मोत्ति। यो भवार्णवे निपतन्तं जीवं क्षमादिगुणोपष्टम्भदानेन धारयति स धर्मो भगवत्प्रणीतः श्रुतचारित्रलक्षणस्तस्य परीक्षा-

२ स धर्मो यो जीवं धारयति भवार्णवे निपतन्तम्।
तस्य परीक्षामूलं मध्यस्थत्वमेव जिनोक्तम्॥

१ यच्च न सूत्रैर्विहितं न च प्रतिषिद्धं जने चिररूढम्।
स्वमतिविकल्पितदोषास्तदपि न दूषयन्ति गीतार्थाः॥

मूलं मध्यस्थत्वमेव जिनोक्तम्, अज्ञातविषये माध्यस्थादेव हि गलितदुर्ग्रहाणां धर्मवादेन तत्त्वोपलम्भप्रसिद्धेः।

ननु सदसद्विषयं माध्यस्थ्यं प्रतिकूलमेव।

तदुक्तम्—

"सुनिश्चितं मत्सरिणो जनस्य न नाथमुद्रामतिशेरते ते।
माध्यस्थ्यमास्थाय परीक्षका ये मणौ च काचे च समानुबन्धाः" ॥

इति कथं तद्भवद्भिः परीक्षानुकूलमुच्यते? इति चेत्। सत्यम्, स्फुटातिशयशालिपरविप्रत्तिविषय*पक्षद्वयान्यतरनिर्द्धारणानुकूलव्यापाराभावलक्षणस्य माध्यस्थ्यस्य परीक्षाप्रतिकूलत्वेऽपि स्वाभ्युपगमहानिभयप्रयोजकदृष्टिरागाभावलक्षणस्य तदनुकूलत्वात् ॥२॥

अथ मध्यस्थः कीदृग्भवति? इति तल्लक्षणमाह—

मज्झत्थो अ अणिस्सियववहारी तस्स होइ गुणपक्खो।
णो कुलगणाइणिस्सा इय ववहारंमि सुपसिद्धं ॥ ३ ॥

मध्यस्थश्चानिश्रितव्यवहारी स्यात्, उपलक्षणत्वादनुपश्रितव्यवहारी च। तत्र निश्रा रागः, उपश्रा च द्वेष इति रागद्वेषरहितशास्त्रप्रसिद्धभाव्याभाव्यसाधुत्वासाधुत्वादिपरीक्षारूपव्यवहारकारीत्यर्थः। अत एव तस्य मध्यस्थस्य गुणपक्षो 'गुणा एवादरणीयाः' इत्यभ्युपगमो भवति, न तु कुलगणादिनिश्रा—निजकुलगणादिना तुल्यस्य सद्भूतदोषाच्छादनयाऽसद्भूतगुणोद्भावनया च पक्षपातरूपा। तथा कुलगणादिना विसदृशस्यासद्भूतदोषोद्भावनया सद्भूतगुणाच्छादनयाऽपि चोपश्राऽपि न भवति इत्यपि द्रष्टव्यमित्येतद् व्यवहारग्रन्थे सुप्रसिद्धम्, निश्रितोपश्रितव्यवहारकारिणः सूत्रे महाप्रायश्चित्तोपदेशात् ॥ ३ ॥

इत्थं च मध्यस्थस्यानिश्रितव्यवहारित्वाद् यत्कस्यचिदभिनिविष्टस्य पक्षपातवचनं तन्मध्यस्थैर्नाङ्गीकरणीयमित्याह—

---

मध्यस्थश्चानिश्रितव्यवहारी तस्य भवति गुणपक्षः।
नो कुलगणादिनिश्रा इति व्यवहारे सुप्रसिद्धम् ॥ ३ ॥

---

* 'विषये' इति कपुस्तके

तुल्लेवि तेण दोसे पक्खविसेसेण जा विसेसुत्ति ।
सा णिस्सियत्ति सुत्तुत्तिण्णं तं बिंति मज्झत्था ॥४॥

तुल्लेवित्ति । तेन—मध्यस्थस्य कुलादिपक्षपाताभावेन तुल्येऽप्युत्सूत्रभाषणादिके दोषे सति पक्षविशेषेण या विशेषोक्तिः—'स्वपक्षपतितस्य यथाछन्दस्यापरमार्गाश्रयणाभावान्न तथाविधदोषः,' परपक्षपतितस्य तून्मार्गाश्रयणान्नियमेनानन्तसंसारित्वम्' इति, सा विशेषोक्तिर्निश्रिता पक्षपातगर्भेति तां सूत्रोत्तीर्णामागमबाधितां ब्रुवते मध्यस्थाः । आगमे ह्यविशेषेणैवान्यथावादिनामन्यथाकारिणां च महादोषः प्रदर्शितस्तत्कोऽयं विशेषो यत्परपक्षपतितस्यैवोत्सूत्रभाषिणोऽनन्तसंसारित्वनियमो न तु स्वपक्षपतितस्य यथाछन्दादेरिति ॥ ४ ॥

नन्वस्त्ययं विशेषो यत्परपक्षगतस्योत्सूत्रभाषिणो 'वयमेव जैना अन्ये तु जैनाभासाः' इत्येवं तीर्थोच्छेदाभिप्रायेण प्रवर्तमानस्य सन्मार्गनाशकत्वान्नियमेनानन्तसंसारित्वम् , स्वपक्षगतस्य तु व्यवहारतो मार्गपतितस्य नायमभिप्रायः संभवति, तत्कारणस्य जैनप्रवचनप्रतिपक्षाभूतापरमार्गस्याङ्गीकारस्याभावाद् इत्यत आह—

तित्थुच्छेओ व्व मओ सुत्तुच्छेओवि हंदि उम्मग्गो ।
संसारो अ अणंतो भयणिज्जो तत्थ भाववसा ॥५॥

तित्थुच्छेओत्ति । तीर्थोच्छेद इव सूत्रोच्छेदोऽपि 'हंदि' इत्युपदर्शने उन्मार्ग एव मतः । तथा चोन्मार्गपतितानामुत्सूत्रभाषणं यदि तीर्थोच्छेदाभिप्रायेणैवेति भवतो मतं तदोत्सूत्राचरणप्ररूपणप्रवणानां व्यवहारतो मार्गपतितानां यथाछन्दादीनामुत्सूत्रभाषणमपि सूत्रोच्छेदाभिप्रायेणैव स्याद्, विरुद्धमार्गाश्रयणस्येव सूत्रविरुद्धाश्रयणस्यापि मार्गोच्छेदकारणस्याविशेषात्, तथा च द्वयोरप्युन्मार्गः समान एव ।

---

४ तुल्येऽपि तेन दोषे पक्षविशेषेण या विशेषोक्तिः ।
सा निश्रितेति सूत्रोत्तीर्णां तां ब्रुवते मध्यस्थाः ॥
तीर्थोच्छेद इव मतः सूत्रोच्छेदोऽपि हंदि उन्मार्गः ।
संसारश्चानन्तो भजनीयस्तत्र भाववशाद् ॥ ५ ॥

संसार इत्यनन्तस्तत्र भावविशेषाद्भजनीयः, अध्यवसायविशेषं प्रतीत्य संख्यातानन्तभेदभिन्नस्य तस्य हेद्राद्यशातनकृतामप्यभिधानात्। तथा च महानिशीथसूत्रम्—

"[1]जेणं तित्थकरादीणं महतिं आसायणं कुजा, से णं अज्झवसायं पडुच्च जाव णं अणंतसंसारिअत्तणं लभिजत्ति"।

इत्थं चोत्सूत्रभाषिणां नियमादनन्तः संसार इति नियमः परास्तः। किं च कालीदेवीप्रमुखाणां षष्ठाङ्गे "[2]अहाछंदा अहाछंदविहारिणीउत्ति" पाठेन यथाच्छन्दत्वभणनादुत्सूत्रभाषित्वं सिद्धम्।

"[3]उस्सुत्तमायरंतो उस्सुत्तं चेव पण्णवेमाणो।
एसो उ अहाछंदो इच्छाछंदुत्ति एगठ्ठा॥"

इत्यावश्यकनिर्युक्तिवचनात् तासां चैकावतारत्वं प्रसिद्धमिति नायं नियमो युक्तः।

यत्तून्मार्गमाश्रितानामाभोगवतामनाभोगवतां नियमेनान्तसंसारः, प्रतिसमयं तीर्थोच्छेदाभिप्रायेण साम्यात्। यथाछन्दस्तु क्वचिदंशेनाभोगादेवोत्सूत्रभाषी स्यात्, तस्यानाभोगोऽपि प्रायः सम्यगागमस्वरूपापरिणतेः, न च तस्य तदुत्सूत्रभाषणमनन्तसंसारहेतुः, तीर्थोच्छेदाभिप्रायहेतुकस्यैव तस्यानन्तसंसारहेतुत्वादिति। तदसंबद्धम्, एतादृशनियमाभावाद्। नह्युन्मार्गपतिताः सर्वेऽपि तीर्थोच्छेदपरिणामवन्त एव, सरलपरिणामानामपि केषांचिद्दर्शनाद्। न च यथाछन्दादयोऽनाभोगादेवोत्सूत्रभाषिणः, जानतामपि तेषां बहूनां सुविहितसाधुसमाचारप्रद्वेषदर्शनात्।

यस्त्वाह—यथाछन्दत्वभवनहेतूनां पार्श्वस्थत्वभवनहेतूनामिव नानात्वेनागमे भणितत्वाद् यथाछन्दमात्रस्योत्सूत्रभाषित्वनियमोऽप्रमाणिकै(क?) इति। तदरमणीयम्, आगम एव यथाछन्दस्योत्सूत्रप्ररूपणाया नियतव्यवस्थाप्रदर्शनात्।

---

१ येन तीर्थकरादीनां महतीमाशातनां कुर्यात्, स्याध्यवसायं प्रतीत्य यावदनन्तसंसारित्व लभेत॥

२ यथाछन्दा यथाछन्दविहारिणी त्विति॥

३ उत्सूत्रमाचरन् उत्सूत्रं चैव प्रज्ञापयन्।
एष तु यथाच्छन्द इच्छाछन्द इत्येकार्थौ॥

तदुक्तं व्यवहारभाष्ये—

अहाछंदस्स परूवण उस्सुत्ता दुविह होइ णायव्वा ।
चरणेसु गईसु जा, तत्थ चरणे इमा होइ ॥ १ ॥
पडिलेहणि-मुहपोत्तिय-रयहरण-निसिज्ज-पायमत्तए पट्टे ।
पडलाइं चोल उण्णादसिआ पडिलेहणापोत्तं ॥ २ ॥
दंतछिन्नमलित्तं हरियट्ठिय मज्जणा यणं त (छत्र) स्स ।
अणुवाइ अणणुवाइपरूव चरणे गतीसुंपि ॥ ३ ॥
अणुवाइति नज्जइ जुत्तीपडियं खु भासए एसो ।
जं पुण सुत्तावेयं तं होइ अणाणुवाइत्ति ॥
सागारिआइपलियंक-णिसिज्जासेवणा य गिहिपत्ते ।
णिग्गंथिचेट्ठणाइ पडिसेहो मासकप्पस्स ॥
चारे वेरज्जे वा पढमसमोसरण तह णितिएसु ।
सुण्णे अक्कपिए अ अणाउंछे य संभोगे ॥
किंवा अकप्पिएणं गहियं फासुंपि होइ उ अभोज्जं ।
अन्नाउंछं को वा होइ गुणो कप्पिए गहिए ॥
पंचमहव्वयधारी समणा सव्वेवि किं ण भुंजंति ।
इय चरणवितथवादी इत्तो वुच्छं गईसुं तु ॥

---

यथाछन्दस्य प्ररूपणा उत्सूत्रा द्विविधा भवति ज्ञातव्या ।
चरणेषु गतिषु या तत्र चरणे इयं भवति ॥ १ ॥
प्रतिलेखनी-मुखपोतिका रजोहरण-निषद्या पात्रमात्रके पट्टे ।
पटलानि चोल(पट्टः) ऊर्णादशा प्रतिलेखनापोतं ॥ २ ॥
दन्तच्छिन्नमलिप्तं हरितस्थित मार्जना चाछत्रस्य ।
अनुपात्यनुपातिप्ररूपणं चरणे गतिष्वपि ॥ ३ ॥
अनुपातीति ज्ञायते युक्तिपतितं खलु भाषते एषः ।
यत्पुनः सूत्रापेतं तद् भवति अननुपातीति ॥
सागारिकादिपर्यङ्कनिषद्यासेवना च गृहिपात्रे ।
निर्ग्रन्थीस्थानादि प्रतिषेधो मासकल्पस्य ॥
चारे वैराज्ये वा प्रथमसमवसरणे तथा नित्येषु ।
शून्ये अकल्पिके चाज्ञातोञ्छे च संभोगे ॥
किंवदकाल्पिकेन गृहीतप्रासुकमपि भवति त्वभोज्यम् ।
अज्ञातोञ्छं को वा भवति गुणो कल्पिकेन गृहीते ॥
पञ्चमहाव्रतधारिणो श्रमणाः सर्वेऽपि किं न भुञ्जते ? ।
इति चरणवितथवादी इतो वक्ष्ये गतिषु तु ॥

खेत्तं गओ अडविं इक्को संचिट्ठए तहिं चेव ।
तित्थयरो पुण पियरो खेत्तं पुण भावओ सिद्धिति ॥

एतासां गाथानामयं संक्षेपार्थः—अहछंदस्सत्ति । यथाछन्दस्य प्ररूपणा उत्सूत्रा—सूत्रादुत्तीर्णा द्विविधा भवति ज्ञातव्या । तद्यथा–चरणेषु चरणविषया, गतिषु गतिविषया ॥ १ ॥

तत्र या चरणे चरणविषया सा इयं वक्ष्यमाणा भवति, तामेवाह–पडिलेहणित्ति । मुखपोतिका मुखवस्त्रिका सैव प्रतिलेखिनी पात्रप्रत्युपेक्षिका पात्रकेसरिका, किं द्वयोः परिग्रहेण ? अतिरिक्तोपधिग्रहणदोषादेकयैव मुखपोतिकया कायभाजनोभयप्रत्युपेक्षणकार्यनिर्वाहेणापरवैफल्यात् । तथा रयहरणणिसिज्जत्ति । किं रजोहरणस्य द्वाभ्यां निषद्याभ्यां कर्तव्यम् ? एकैव निषद्याऽस्तु । पायमत्तएत्ति । यदेव पात्रं तदेव मात्रकं क्रियताम्, मात्रकं वा पात्रं क्रियताम्, किं द्वयोः परिग्रहेण ? एकेनैवान्यकार्यनिष्पत्तेः । भणितं च—"यो भिक्षुस्तरुणो बलवान् स एकं पात्रं गृह्णीयाद्" इति । तथा पट्टएत्ति । य एव चोलपट्टकः स एव रात्रौ संस्तारकस्योत्तरपट्टः क्रियताम्, किं पृथगुत्तरपट्टग्रहेण ? । तथा पडलाइं चोलत्ति । पटलानि किमिति पृथग् ध्रियेते (यन्ते ?), चोलपट्टक एव भिक्षार्थं हिण्डमानेन द्विगुणस्त्रिगुणो वा कृत्वा पटलस्थाने वा निवेश्यताम् । उण्णादसियत्ति । रजोहरणस्य दशाः किमित्यूर्णमय्यः क्रियन्ते, क्षौमिकाः क्रियन्ताम्, ता ह्यूर्णमयीभ्यो मृदुतरा भवन्ति । पडिलेहणापोत्तंति । प्रतिलेखनावेलायामेकं पोतं प्रस्तार्य तस्योपरिसमस्त वस्त्रप्रत्युपेक्षणां कृत्वा तदनन्तरमुपाश्रयाद्बहिः प्रत्युपेक्षणीयम्, एवं हि महती जीवदया कृता भवतीति ॥ २ ॥

दंतछिन्नमिति । हस्तगताः पादगता वा नखाः प्रवृद्धा दन्तैश्छेत्तव्याः न नखरदनेन । नखरदनं हि ध्रियमाणमधिकरणं भवति । तथा अलित्तंति । पात्रमलिप्तं कर्तव्यम्, लेपे बहु दोषसंभवान्न पात्रं लेपनीयमिति भावः । हरियट्ठियत्ति । हरितप्रतिष्ठितं भक्तपानादि डगलादि च ग्राह्यम्, तद्ग्रहणे हि तेषां हरितकायजीवानां भारापहारः कृतो भवति । पमज्जणा यछन्नेत्ति । यदि छन्ने जीवदयानिमित्तं प्रमार्जना क्रियते ततो बहिरप्रच्छन्ने क्रियताम्, दयापरि-

---

क्षेत्रं गतोऽटवीमेकः संतिष्ठते तत्रैव ।
तीर्थकरः पुनः पिता क्षेत्रं पुनः भावतः सिद्धिरिति ॥

णामानिशेषात् । ईदृशी यथाछन्दस्य प्ररूपणा चरणेषु गतिषु चानुपातिन्यननुपातिनी च भवति ।

अनुपातिन्यननुपातिन्योः स्वरूपमाह—अणुवाइत्ति । यद् भाषमाणः स यथाछन्दो ज्ञायते, यथा खु निश्चितं युक्तिपतितं युक्तिसंगतमेव भाषते तदनुपातिप्ररूपणम् । यथा—यैव मुखपोतिका सैव प्रतिलेखनिकेत्यादि । यत्पुनर्भाष्यमाणं सूत्रापेतं प्रतिभासते तद्भवत्यननुपाति । यथा चोलपट्टः पटलानि क्रियन्तामिति, षट्पदिकापतनसंभवेन सूत्रयुक्तिबाधात् । अथवा सर्वाण्येव पदान्यगीतार्थप्रतिभासापेक्षयाऽनुपातीनि, गीतार्थप्रतिभासापेक्षया त्वननुपातीनीति ॥ ४ ॥

इदं चान्यत्तत्प्ररूपणम्—सागारियाइत्ति । सागारिकः शय्यातरस्तद्विषये ब्रूते—शय्यातरपिण्डग्रहणे नास्ति दोषः, प्रत्युत शय्यातरस्य महालाभ इति । आदिशब्दात्स्थापनाकुलेष्वपि प्रविशतो नास्ति दोषः, प्रत्युत भिक्षाशुद्धिरित्यादि ग्राह्यम् । पलिअंकत्ति । पर्यङ्कादिषु मत्कुणादिरहितेषु परिभुज्यमानेषु न को पि दोषः, प्रत्युत भूमावुपविशतो लाघवादयो दोषाः । निसेज्जासेवणत्ति । गृहिनिषद्यायां न दोषः, प्रत्युत धर्मश्रवणेन लाभ इति । गिहिपत्तेत्ति । गृहिपात्रके भोजनं कस्मान्न क्रियते ? नह्यत्र दोषः, प्रत्युत सुन्दरपात्रोपभोगात्प्रवचनानुपघातलक्षणोऽन्यपात्रभारावहनलक्षणश्च गुण इति । निग्गंथिचेट्ठणाइत्ति । निर्ग्रन्थीनामुपाश्रये च स्थानादौ को दोषः ? यत्र तत्र स्थितेन शुभं मनः प्रवर्तव्यम्, तच्च स्वायत्तमिति । तथा मासकल्पस्य प्रतिषेधस्तेन क्रियते, यदि दोषो न विद्यते, तदा परतोऽपि तत्र स्थेयमिति ॥ ५ ॥

चारेत्ति । चारश्चरणं गमनमित्यर्थस्तद्विषये ब्रूते—वृष्ट्यभावे चतुर्मासकमध्येऽपि गच्छतां को दोष इति । तथा वेरज्जे यत्ति । वैराज्येऽपि ब्रूते—साधवो विहारं कुर्वन्तु, परित्यक्तं हि तैः शरीरम्, सोढव्याः खलु साधुभिरुपसर्गा इति । पढमसमोसरणंति । प्रथमसमवसरणं वर्षाकालस्तत्र ब्रूते—किमिति प्रथमसमवसरणे शुद्धं वस्त्रादि न ग्राह्यम् ? द्वितीयसमवसरणेऽपि ह्युद्गमादिदोषशुद्धमिति गृह्यते, तत्कोऽयं विशेषः ? इति । तह णिइएसुत्ति । तथा नित्येषु नित्यवासिषु प्ररूपयति—नित्यवासे न दोषः, प्रत्युत प्रभूतसूत्रादिग्रहणलक्षणो गुण इति । तथा सुन्नत्ति । यद्युपकरणं न केनापि ह्रियते ततः शून्यायां वसतौ को दोषः ? । अकप्पिये अत्ति । अकल्पिकोऽगीतार्थस्तद्विषये ब्रूते—अकल्पिकेनानीतमज्ञातोञ्छं किं न भुज्यते ?, तस्याज्ञातोञ्छतया विशेषतो परिभोगार्हत्वात् । संभोएत्ति ।

संभोगे सूते—सर्वेऽपि पञ्चमहाव्रतधारित्वेन साधवः सांभोगिका इति। अकप्पिए-अत्ति। विशिष्य विवृणोति किं वत्ति। किंवत्—केन प्रकारेणाकल्पिकेनागीतार्थेन गृहीतं प्रासुकमज्ञातोञ्छमपि अभोज्यमपरिभोक्तव्यं भवति। को वा कल्पिकेन (अत्र गाथायां सप्तमी तृतीयार्थे) गृहीते गुणो भवति? नैव कश्चिद्, उभयत्रापि शुद्ध्यविशेषात्। संभोएत्ति व्याचष्टे—पंचमहव्वयधारित्ति। पञ्चमहाव्रतधारिणः सर्वे श्रमणाः किं नैकत्र भुञ्जते? यदेके सांभोगिका अपरे असांभोगिका क्रियन्ते इति। इत्येवमुपदर्शितप्रकारेणानालोचितगुणदोषो यथाछन्दश्चरणविषये वितथवादी॥

अत ऊर्ध्वं तु गतिषु वितथवादिनं वक्ष्यामि—खेत्तगओ यत्ति। स यथाछन्दो गतिष्वेवं प्ररूपणां करोति—एगो गाहावई। तस्स तिण्णि पुत्ता। ते सव्वेवि खिसकम्मोवजीविणो पियरेण खित्तकम्मे णिओइया। तत्थेगो जहाणत्तं करेइ। एगो अडविं गओ देसं देसेण हिंडइत्ति। एगो जिमिउं देवकुलादिसु अच्छति। कालंतरेण तेसिं पिया मओ। तेहिं सव्वंपि पितिसंतियं तिकाउं समं विभत्तं। तेसिं जं एक्केणं उवज्जिअं तं सव्वेसिं सामन्नं जायं। एवं अम्हं पिया तित्थयरो तस्संति उवदेसेणं सव्वेवि समणा कायकिलेसं कुव्वंति। अम्हे ण करेमो। जं तुज्झेहिं कयं तं अम्हं सामन्नं। जहा तुब्भे देवलोगं सुकुलपच्चायाति सिद्धिं वा गच्छह तहा अम्हेवि गच्छिस्सामोत्ति"। एष गाथाभावार्थः। अक्षरयोजनिका त्वियम्—एकः पुत्रः क्षेत्रं गतः। एकोऽटवीदेशान्तरेषु परिभ्रमतीत्यर्थः। अपर एकत्रैव संतिष्ठते। पितरि च मृते धनं सर्वेषामपि समानम्। एवमत्रापि मातापितृस्थानीयस्तीर्थकरः, क्षेत्रं क्षेत्रफलं धनं पुनर्भावतः परमार्थतः सिद्धिस्तां यूयमिव युष्मदुपार्जनेन वयमपि गमिष्याम इति।

तदेवं यथाछंदस्याप्युत्सूत्रप्ररूपणाव्यवस्थादर्शनात्कथमेवमर्वाग्दृशा निर्णीयते—यदुत मार्गपतितस्य यथाछन्दस्य कस्यचिदनाभोगा-

---

१ एको गाथापतिः। तस्य त्रयः पुत्राः। ते सर्वेऽपि क्षेत्रकर्मोपजीविनः पित्रा क्षेत्रकर्मणि नियोजिताः। तत्रैको यथाऽऽज्ञप्तं करोति। एकोऽटवीं गतो देशाद्देशान्तरेषु भ्रमति। एको जिमित्वा देवकुलादिष्वास्ते। कालान्तरेण तेषां पिता मृतः। तैः सर्वमपि पितृसत्कं आकृत्य समं विभक्तम्। तेषां यदेकेनोपार्जितं तत्सर्वेषां सामान्यं जातम्। एवमस्माकं पिता तीर्थकरः, तस्येत्युपदेशेन सर्वेऽपि श्रमणाः कायक्लेशं कुर्वन्ति। वयं न कुर्मः। यद्युष्माभिः कृतं तदस्माकं सामान्यम्। यथा यूयं देवलोकं सुकुलप्रत्यायातिं सिद्धिं वा गच्छत, तथा वयमपि गमिष्याम इति।

देवोत्सूत्रभाषणम्, तच्च नानन्तसंसारकारणम्, उन्मार्गपतितानां तु सर्वेषामाभोगवतामनाभोगवतां वा तत्[redacted]रणमेव, तीर्थोच्छेदाभिप्रायमूलत्वादिति, साध्वाचारोच्छेदाभिप्रायस्य यथाछन्देऽप्यविशेषात्।

अथ—" उम्मग्गमग्गसंपट्ठिआण साहूण गोअमातूणं (?)।
संसारो अ अणंतो होइ य सम्मग्गणासीणं ॥"

इति गच्छाचारप्रकीर्णकव[redacted] निह्नवानामनन्त एव संसारो ज्ञायते न तु यथाछन्दानामपि, अपरमार्गाश्रयणाभावादिति चेद्। उन्मार्गपतितो निह्नव एवेति कथमुद्देश्यनिर्णयः? साधुपदेन शाक्यादिव्यवच्छेदेऽपि यथाछन्दादिव्यवच्छेदस्य कर्तुमशक्यत्वात्, गुणभेदादिनेव क्रियादिविपर्याससमूलकदालम्बनप्ररूपणयाऽप्युन्मार्गभवनाविशेषाद्। न हि 'मार्गपतित' इत्येतावता शिष्टाचारनाशको यथाछन्दादिरपि नोन्मार्गगामी।

अथ यथाछन्दादीनामप्युन्मार्गगामित्वमिष्यते एव, न त्वनन्तसंसारनियमः, तन्नियमाभिधायकवचने उन्मार्गसंप्रस्थितपदेन तीर्थोच्छेदाभिप्रायवत एव ग्रहणादिति चेद्,। अहो किंचिदपूर्वयुक्तिकौशलम्! यदुक्तवचनबलात्तीर्थच्छेदाभिप्रायवतां निह्नवानामनन्तसंसारनियमसिद्धौ पदविशेषतात्पर्यग्रहः, तस्मिंश्च सति तत्सिद्धिरित्यन्योन्याश्रयदोषमापतन्तं न वीक्षसे। संप्रदायादीदृशोऽर्थो गृहीत इति न दोष इति चेद्। न, संप्रदायादध्यवसायं प्रतीत्य निह्नवानामपि संख्यातादिभेदभिन्नस्यैव संसारस्य सिद्धत्वाद्, उन्मार्गसंप्रस्थितानां तीव्राध्यवसायानामेव ग्रहणे बाहुल्याभिप्रायेण व्याख्याने दोषाभावाद्। न चेदेवं तदा 'वयमेव स्याद्वादिस्थित्यादिकारिणः' इत्याद्युत्सूत्रभाषिणोऽनवच्छिन्नमिथ्यात्वसंतानपरमहेतोस्तीर्थोच्छेदाभिप्रायवतो बलभद्रस्य जीवस्याप्यनन्तसंसारोत्पत्तिः प्रसज्येत। न चैतदशास्त्रीयं वचनम्, त्रिषष्टीयनेमिचरित्रेऽप्येवमुक्तत्वात्। तथाहि—

---

१ उन्मार्गमार्गसंप्रस्थितानां साधूनां......(?)।
संसारश्चानन्तो भवति स्वमार्गनाशिनाम्॥

"प्रतिपद्य तथा रामो जगाम भरतावनौ ।
तथैव कृत्वा ते रूपे दर्शयामास सर्वतः ॥
एवमूचे च भो लोकाः! कृत्वा नौ प्रतिमाः शुभाः ।
प्रकृष्टदेवताबुद्ध्या यूयं पूजयतादरात् ॥
वयमेव यतः सृष्टिस्थितिसंहारकारिणः ।
वयं दिव इहायामो यामश्च स्वेच्छया दिवम् ॥
निर्मिता द्वारकाऽस्माभिः संहृता च यियासुभिः ।
कर्ता हर्ता च नान्योऽस्ति स्वर्गदा वयमेव च ॥
एवं तस्य गिरा लोकः सर्वो ग्रामपुरादिषु ।
प्रतिमाः कृष्णहलिनोः कारंकारमपूजयत् ॥
प्रतिमाऽर्चनकर्तॄणां महान्तमुदयं ददौ ।
स सुरस्तेन सर्वत्र तद्भक्तोऽभूज्जनोऽखिलः ॥" इति ॥६॥

ननु बलभद्रस्योत्सूत्रवचनमिदं न स्याद्वादतो न नियतम्, नियतोत्सूत्रं च निह्नवत्वकारणम्, अत एवापरापरोत्सूत्रभाषिणां यथाछन्दत्वमेव, नियतोत्सूत्रभाषिणां च निह्नवत्वमेव । तदुक्तमुत्सूत्रकन्दकुद्दालकृता—

"तस्मादनियतोत्सूत्रं यथाछन्दत्वगेपु ।
न तद्व्यस्थितकोत्सूत्रं निह्नवत्वमुपास्थितम् ॥" इति

एतदेव च नियमतोऽनन्तसंसारकारणम् । अत एव यः कश्चिद् मार्गपतितोऽप्युत्सूत्रं भणित्वाऽभिमानादिवशेन स्वोक्तवचनं स्थिरीकर्तुं कुयुक्तिमुद्भावयति, न पुनरुत्सूत्रभयेन त्यजति स उन्मार्गपतित इवावसातव्यः, नियतोत्सूत्रभाषित्वात्, तस्यापरमार्गाश्रयणाभावेऽपि निह्नवस्येवासदाग्रहवत्त्वाद् इत्यस्मन्मतमित्याशङ्कायामाह—

**णियउस्सुत्तणिमित्ता संसाराणंतया ण सुत्तुत्ता ।**
**अज्झवसायाणुगओ भिन्नो च्चिय कारणं तीसे ॥६॥**

---

नियतोत्सूत्रनिमित्ता संसारानन्तता न सूत्रोक्ता ।
अध्यवसायानुगतो भिन्न एव कारणं तस्याः ॥ ६ ॥

णियउसुत्तत्ति । नियमेनोत्सूत्रं निमित्तं यस्यां सा तथा, संसारानन्तता न सूत्रोक्ता, नियतोत्सूत्रं विनाऽपि मैथुनप्रतिसेवाद्युन्मार्गसमाचरण-तद्वन्द्वजादिनाऽप्यनन्तसंसारार्जनेन व्यभिचारात् । न चोत्सूत्रभाषणजन्येऽनन्तसंसारार्जने नियतोत्सूत्रभाषणस्यैव हेतुत्वान्न दोषः, तादृशकार्यकारणभावबोधकनियतसूत्रानुपलम्भात् ।

" उस्सुत्तभासगाणं बोहीणासो अणंतसंसारो "—

इत्यादिवचनानां सामान्यत एव कार्यकारणभावग्राहकत्वात् । उत्तरकालं तत्र नियतत्वाख्यो विशेषः कल्प्यते इति चेद् , नैतदेवम् , तथा सति यथाछन्दस्य कस्याप्यनन्तसंसारानुपपत्तिप्रसक्तेः, तस्य त्वदभिप्रायेण परापरभावेन गृहीतयुक्तोत्सूत्रस्य नियतोत्सूत्रभाषित्वाभावात् ।

तथा च—

" सव्वप्पवयणसारं मूलं संसारदुक्खमुक्खस्स ।
संमत्तं मइलित्ता ते दुग्गइवड्ढया हुंति ॥ "

इत्यादिभाष्यवचनविरोधः । अथ यथाछन्दस्यापि यस्यानन्तसंसारार्जनं तस्य क्लिष्टाध्यवसायविशेषादेव, उन्मार्गपतितस्य निह्नवस्य तु नियतोत्सूत्रभाषणादेवेति न दोष इति चेद् । न, एवं सत्यनियतहेतुकत्वप्रसङ्गात् । अनियतहेतुकत्वं नामेति व्यक्तमाकरे । तथा च विप्रतिपन्न उन्मार्गस्थोऽनन्तसंसारी, नियतोत्सूत्रभाषित्वाद् इत्यत्राप्रयोजकत्वम् , किं तर्हि अनन्तसंसारतायामनुगतं नियामकमित्यत्राह—तस्याः संसारानन्ततायाः कारणं भिन्न एकगुणोऽध्यवसायस्तीव्रत्वसंज्ञितः केवलिना, केवलिना निर्धीयमानोऽस्तीति गम्यम् । यस्य संग्रहादेशानन्त्वानन्त्येनैव तस्यानुगतं हेतुत्वम् , व्यवहारादेशाच्च क्रियाविशेषसहकारित्वं घटकत्वं वा । शब्दमात्रानुगततीव्राध्यवसायसहकृतायास्तत्पूर्विकाया वा पापक्रियाया अनन्तसंसारहेतुत्वव्यवहारात् । स च

---

१ उत्सूत्रभाषकानां बोधिनाशोऽनन्तसंसारः ॥
२ सर्वप्रवचनसारं मूलं संसारदुःखमोक्षस्य ।
संम्यक्त्वं मलिनयित्वा ते दुर्गतिवर्द्धका भवन्ति ॥

तीव्राध्यवसाय आभोगवतामनाभोगवतां वा शासनमालिन्यनिमित्त-प्रवृत्तेस्तकां रौद्रानुबन्धानां स्याद्, अनाभोगेनापि शासनमालिन्यप्रवृत्तौ महामिथ्यात्वार्जनोपदेशात् । तदुक्तमष्टकप्रकरणे—

" यः शासनस्य मालिन्येऽनाभोगेनापि वर्तते ।
स तन्मिथ्यात्वहेतुत्वादन्येषां प्राणिनां ध्रुवम् ॥
बध्नात्यपि तदेवालं परं संसारकारणम् ।
विपाकदारुणं घोरं सर्वानर्थनिबन्धनम् ॥ "

शासनमालिन्यनिमित्तप्रवृत्तिश्च निह्नवानामिव यथाछन्दादीनाम-प्यविशिष्टेति कोऽयं पक्षपातः? यदुत निह्नवानामनन्तसंसारनियम एव, यथाछन्दादीनां त्वनियम इति । अनाभोगेनापि विषयविशेषद्रोहस्य विषमविपाकहेतुत्वाद्, अनियतोत्सूत्रभाषणस्य निःशङ्कताऽभिव्यञ्जक-तया सुतरां तथाभावात् । यथा ह्याभोगेनोत्सूत्रभाषिणां रागद्वेषोत्कर्षा-दतिसंक्लेशस्तथाऽनाभोगेनोत्सूत्रभाषिणामप्यप्रज्ञापनीयानां मोहोत्क-र्षोदयं भवन्ननिवारित एव । अत एव तेषां भावशुद्धिरप्यप्रमाणम्, मार्गाननुसारित्वात् । तदुक्तमष्टकप्रकरणे—

" भावशुद्धिरपि ज्ञेया यैषा मार्गानुसारिणी ।
प्रज्ञापना प्रियाऽत्यर्थं न पुनः स्वाग्रहात्मिका ॥
रागो द्वेषश्च मोहश्च भावमालिन्यहेतवः ।
एतदुत्कर्षतो ज्ञेयो हन्तोत्कर्षस्य तत्त्वतः ॥
तथोत्कृष्टे जगत्यस्मिन् शुद्धिर्वै शब्दमात्रकम् ।
स्वबुद्धिकल्पनाशिल्पनिर्मितं नार्थवद् भवेदिति ॥

किं च—पार्श्वस्थादीनां नियतोत्सूत्रमप्युयुक्तविहारिणामपवाद-लक्षणं द्वितीयबालतानियामकमस्त्येव । यदाचारसूत्रम्—

" सीलमंता उवसंता संखाए रीयमाणा असीला अणुवयमाणस्स बितिया मन्दस्स बालया णिअट्टमाणा वेगे आयारगोयरमाइक्खंति नाणभट्टा दंसण-लूसिणोत्ति ॥ "

---

१ शीलवन्त उपशान्ता संख्यया(ज्ञानेन) रीयमाना (पराक्रममाणाः) 'अशीलाः' अनुवदतो द्वितीया मन्दस्य बालता, निवर्तमाना वा एके आचारगोचरमाचक्षते-ज्ञानभ्रष्टा दर्शनलूषिण इति ।

एतद्दर्शयेथा—शीलमष्टादशशीलाङ्गसहस्रसंख्यम्, यदि वा महाव्रतसमाधानं पञ्चेन्द्रियजयः कषायनिग्रहस्त्रिगुप्तिगुप्तता चेत्येतच्छीलं विद्यते येषां ते शीलवन्तः। तथोपशान्ताः, कषायोपशमात्। अत्र शीलवद्ग्रहणेनैव गतार्थत्वात् 'उपशान्ताः' इत्येतद्विशेषणं कषायनिग्रहप्राधान्यख्यापनार्थम्। सम्यक् ख्याप्यते प्रकाश्यतेऽनयेति संख्या—प्रज्ञा, तया रीयमाणाः—संयमानुष्ठानेन पराक्रममाणाः। कस्यचिद्विश्रान्तभागधेयतया 'अशीला एते' इत्येवमनुवदतो अनु पश्चात् वदतोऽपवदतः, अन्येन वा मिथ्यादृष्ट्यादिना 'कुशीलाः' इत्येवमुक्तेऽनुवदतः पार्श्वस्थादेर्द्वितीयैषा मन्दस्याज्ञस्य बालता—मूर्खता। एकं तावत्स्वतश्चारित्रापगमः, पुनरपरानुद्युक्तविहारिणोऽपवदतीत्येषा द्वितीया बालता। यदि वा 'शीलवन्ता एते, उपशान्ता वा' इत्येवमन्येनाभिहिते 'क्वैषां प्रचुरोपकरणानां शीलवत्तोपशान्तता वा' इत्येवमनुवदतो हीनाचारस्य द्वितीया बालता भवतीति। अपरे तु वीर्यान्तरायोदयात्स्वतोऽवसीदन्तोऽप्यपरसाधुप्रशंसान्विता यथावस्थितमाचारगोचरमावेदयेयुरिति एतद्दर्शयितुमाह—णिअट्टमाणा इत्यादि। एके कर्मोदयात्संयमान्निवर्तमाना लिङ्गाद्वा वाशब्दादनिवर्तमाना वा यथावस्थितमाचारगोचरमाचक्षते। 'वयं तु कर्तुमसहिष्णवः, आचारस्त्वेवंभूतः' इत्येवं वदतां तेषां द्वितीयबालता न भवत्येव। न पुनर्वदन्ति एवंभूत एव आचारो योऽस्माभिरनुष्ठीयते, साम्प्रतं दुःषमानुभावेन बलाद्यपगमान्मध्यमभूतैव वर्तिनी श्रेयसी नोत्सर्गावसर इति। उक्तं हि—

"नात्यायतं न शिथिलं यथा युञ्जीत सारथिः।
तथा भद्रं वहन्त्यश्वा योगः सर्वत्र पूजितः॥"

अपि च—

"[1]जो जत्थ होइ भग्गो ओगासं सो परं अविदंतो।
गंतुं तत्थ वयंतो इमं पहाणंति घोसेइ॥" इत्यादि।

किंभूताः पुनः? एतदेव समर्थयेयुरित्याह—नाणभट्ठा। सदसद्विवेको ज्ञानं तस्माद्भ्रष्टा ज्ञानभ्रष्टाः। तथा दंसणलूसिणोत्ति। सम्यग्दर्शनविध्वंसिनो सदनुष्ठानेन स्वतो विनष्टाः, अपरानपि शङ्कोत्पादनेन सन्मार्गाच्च्यावयन्तीति॥

---

१ यो यत्र भवति भग्नोऽवकाशं स परमविन्दन्।
गन्तुं तत्र व्रजन् इदं प्रधानमिति घोषयति॥

तथा च संविग्नपाक्षिकातिरिक्तस्य पार्श्वस्थादेरपि द्वितीयबालता, नियामकनियतोत्सूत्रसद्भावात् , तस्यानन्तसंसारनियमाश्लिष्टस्यापि तदनियम एव, भवभेदस्य भावभेदनियतत्वादिति प्रतिपत्तव्यम् ॥

ननु कर्म तत्कृत्कुर्वतोऽप्यसंख्येयकालस्थितिकमेव बद्ध्यते, तत्कथं तीव्राध्यवसायवतामप्युत्सूत्रभाषिणामनन्तसंसारित्वं स्यात् ? इत्याशङ्कायामाह—

**कम्मं बन्धइ पावं जो खलु अणुवरयतिव्वपरिणामो।**
**असुहाणुबन्धजोगा अणंतसंसारिआ तस्स ॥ ७ ॥**

कम्मंति । कर्म बध्नाति पापं यः खल्वनुपरततीव्रपरिणामः— अविच्छिन्नतथाविधसंक्लिष्टाध्यवसायः स्वेच्छानुरोधान्नियतास्रवप्रवृत्तो वाऽनियतास्रवप्रवृत्तो वा नियतोत्सूत्रभाषी वाऽनियतोत्सूत्रभाषी वाऽप्राप्तानुशयस्तस्याशुभानां ज्ञानावरणीयादिपापप्रकृतीनामनुबन्धस्योत्तरवृद्धिरूपस्य बध्यमानप्रकृतिषु तत्तच्छक्तिरूपस्य वा योगात्संबन्धादनन्तसंसारिता भवति । ग्रन्थिभेदात्प्रागप्यनन्तसंसारार्जनेऽशुभानुबन्धस्यैव हेतुत्वात्प्राप्तसम्यग्दर्शनानामपि प्रतिपातेन तत एवानन्तसंसारसंभवात् । तदुक्तमुपदेशपदे—

“ [1]गंठीइ आरओ विहु असई बंधो ण अन्नहा होइ ।
ताए सो वि हु एवं णेओ असुहाणुबन्धोत्ति ॥ ”

ततश्च बन्धमात्रान्नानन्तसंसारिता, किन्त्वनुबन्धादिति स्थितम् । अत एवाभोगादनाभोगाद्वोत्सूत्रभाषिणामिह जन्मनि जन्मान्तरे वाऽऽलोचितप्रतिक्रान्ततत्पातकानामनुबन्धविच्छेदेन नानन्तसंसारिता , केवलमनन्तभववेद्यनिरुपक्रमकर्मबन्धे तन्निःशेषतां यावत्प्रायश्चित्तप्रतिपत्तिरेव न स्याद् , अध्यवसायविशेषात् । नियतोपक्रमणीयस्वभाव-

कर्म बध्नाति पापं यो खल्वनुपरततीव्रपरिणामः ।
अशुभानुबन्धयोगादनन्तसंसारिता तस्य ॥ ७ ॥

१ ग्रन्थेरारतोऽपि खलु असकृद् बन्धो नान्यथा भवति ।
तस्याः सोऽपि खल्वेवं ज्ञेयोऽशुभानुबन्ध इति ॥

कर्मबन्धे चेह जन्मनि जन्मान्तरे वा प्रायश्चित्तप्रतिपत्तिः स्यात् । अत एव जमालिशिष्यादीनां भगवत्समीपमुपगतानां तद्भव एवोत्सूत्रभाषणप्रायश्चित्तप्रतिपत्तिः । कालीप्रभृतीनां च "तस्स ठाणस्स अणालोइअपडिकंता कालमासे कालं किच्चा०" इत्यादिवचनाद् तद्भवानालोचितपार्श्वस्थत्वादिनिमित्तपापानां भवान्तर एव प्रायश्चित्तप्रतिपत्तिः । "कालीणं भंते देवी ताओ देवलोगाओ अणंतरं उव्वट्टित्ता कहिं गच्छिहिति ? कहिं उववज्जिहिति ? । गोयमा ! महाविदेहवासे सिज्झिहिति ॥" इत्यादिवचनात्तासां भवान्तर एव पूर्वभवाचीर्णपार्श्वस्थत्वादिजातपापकर्मप्रायश्चित्तभणनात "सव्वा वि हु पव्वज्जा पायच्छित्तं भवंतरकडाणं कम्माणं" इत्यादिपूर्वाचार्यवचनात्प्रव्रज्याया एव भवान्तरकृतकर्मप्रायश्चित्तरूपत्वाद् । एतेन 'कृतस्य पापस्य प्रायश्चित्तप्रतिपत्तिस्तस्मिन्नेव भवे भवति न पुनः जन्मान्तरेऽपि' इति वदन् तत्र "जावाउ सावसेसं" इत्यादिसंमतिमुद्भावयन् व्यक्तामसंलग्नकतामनवगच्छन्निरस्तो बोध्यः ।

अथ पूर्वभवकृतपापपरिज्ञानाभावात्कुतस्तदालोचनम् ? कुतस्तरां च तत्प्रायश्चित्तम् ? इति चेत्, न, एतद्भवकृतानामपि विस्मृतानामिव पूर्वभवकृतानामपि पापानां सामान्यज्ञानेनालोचनप्रायश्चित्तसंभवात्, अत एव मिथ्यात्वहिंसादेः पारभविकस्यापि निन्दागर्हादिकम् ।

"इहभवियमन्नभवियं मिच्छत्तपवत्तणं जमहिगरणं ।
जिणपवयणपडिकुट्ठं दुट्ठं गरिहामि तं पावं ॥"

"इहं भवे अन्नेसु वा भवग्गहणेसु पाणाइवाओ कओ वा काराविओ वा कीरंतो वा परेहिं समणुण्णाओ तं निंदामि गरिहामि ।"

१ तस्य स्थानस्यानालोचिताप्रतिक्रान्ता कालमासे कालं कृत्वा० ।

२ काली भगवन् देवी तस्माद्देवलोकादनन्तरमुद्वृत्य कस्यां (गतौ) गमिष्यति, कस्यामुत्पत्स्यते ? । गौतम ! महाविदेहवर्षे सेत्स्यतीति ॥

३ सर्वाऽपि खलु प्रव्रज्या प्रायश्चित्तं भवान्तरकृतानां कर्मणाम् ।

४ यावत्तु अवशेषम् ।

५ इहभाविकमन्यभाविकं मिथ्यात्वप्रवर्तनं यदधिकरणम् ।
जिनप्रवचनप्रतिकुष्टं दुष्टं गर्हे तत्पापम् ॥

६ इह भवे अन्येषु वा भवग्रहणेषु प्राणातिपातः कृतो वा कारितो वा क्रियमाणो वा परैः समनुज्ञातस्तं निन्दामि गर्हे ।

इत्यादि चतुःशरणप्रकीर्णकपाक्षिकसूत्रादावुक्तम्। पापप्रतिघात-गुणबीजाधानसूत्रे हरिभद्रसूरिभिरप्येतद्भवसंबन्धि भवान्तरसंबन्धि वा पापं यत्तत्पदाभ्यां परामृश्य मिथ्यादुष्कृतप्रायश्चित्तेन विशोधनीयमित्युक्तम्। तथाहि—

[1]सरणमुवगओ अ एएसिं गरिहामि दुक्कडं।

[2]जेण्णं अरहंतेसु वा सिद्धेसु वा आयरिएसु वा उवज्झाएसु वा साहुसु वा साहुणीसु वा अन्नेसु वा धम्मट्ठाणेसु माणणिज्जेसु पूअणिज्जेसु तहा माईसु वा पिईसु वा बंधूसु वा मित्तेसु वा उवयारीसु वा ओहेण वा जीवेसु मग्गट्ठिएसु अमग्गट्ठिएसु मग्गसाहणेसु अमग्गसाहणेसु जं किंचि वितहमायरिअं अणायरिअव्वं अणिच्छिअव्वं पावं पावाणुबंधि सुहुमं वा बायरं वा मणेणं वायाए काएणं वा कयं वा काराविअं वा अणुमोइअं वा रागेण वा दोसेण वा मोहेण वा इत्थ वा जम्मे जम्मांतरेसु वा गरहियमेयं दुक्कडमेयं उज्झियव्वमेअं वियाणिअं मए कल्लाणमित्त-गुरु-भगवंतवयणाओ 'एवमेअं' ति रोइअं सद्धाए अरहंतसिद्धसमक्खं गरहामि अहमिणं दुक्कडमेअं उज्झियव्वमेअं इत्थ मिच्छा मि दुक्कडं।

एतद्व्याख्या—यथा चतुःशरणगमनानन्तरं दुष्कृतगर्होक्ता, तामाह—शरणमुपगतश्च सन्नेतेषामर्हदादीनां गर्हे दुष्कृतम्। किंविशिष्टम्? इत्याह—जण्णं अरहंतेसु वा इत्यादि। अर्हदादिविषयमोघेन वा जीवेषु मार्गस्थितेषु—सम्यग्दर्शनादियुक्तेषु, अमार्गस्थितेषु—एतद्विपरीतेषु, मार्गसाधनेषु—पुस्तकादिषु, अमार्गसाधनेषु—खड्गादिषु, यत्किंचिद्वितथमाचरितम्—अविधिपरिभोगादि, अनाचरितव्यं क्रियया, अनेष्टव्यं मनसा पापम्; पापकारणत्वेन पापानुबन्धि, तथा-

---

१ शरणमुपगतश्च एतेषां गर्हे दुष्कृतं यद्।

२ अर्हत्सु वा सिद्धेषु वा आचार्येषु वा उपाध्यायेषु वा साधुषु वा साध्वीषु वा अन्येषु वा धर्मस्थानेषु माननीयेषु पूजनीयेषु तथा मातृषु वा पितृषु वा बन्धुषु वा मित्रेषु वा उपकारिषु वा ओघेण वा जीवेषु मार्गस्थितेषु अमार्गस्थितेषु मार्गसाधनेषु अमार्गसाधनेषु यत्किंचिद्वितथमाचरितम् अनाचरितव्यम् अनेष्टव्यं पापं पापानुबन्धि सूक्ष्मं वा बादरं वा मनसा वाचा कायेन वा कृतं वा कारितं वाऽनुमोदितं वा रागेण वा द्वेषेण वा मोहेन वा अत्र वा जन्मनि जन्मान्तरेषु वा गर्हितमेतद् दुष्कृतमेतद् उज्झितव्यमेतद्, विज्ञातं मया कल्याणमित्र-गुरु-भगवद्वचनाद् 'एवमेतदिति रोचितं श्रद्धया, अर्हत्सिद्धसमक्षं गर्हे। अहमिदं दुष्कृतमेतद् उज्झितव्यमेतद् अत्र मिथ्या मे दुष्कृतम्।

विपाकभावेन गर्हितमेतद् कुल्माऽऽस्पदम्, दुष्कृतमेतद् धर्मबाह्यत्वेन, उज्झितव्यमेतद् हेयतया, विज्ञातं मया कल्याणमित्रगुरुभगवद्वचनाद्, 'एवमेतद्' इति रोचितं श्रद्धया–तथाविधक्षयोपशमजया, अर्हत्सिद्धसमक्षं गर्हे कथम्? इत्याह— दुष्कृतमेतद्, उज्झितव्यमेतद्। अत्र व्यतिकरे 'मिच्छा मि दुक्कडं' वारत्रयं पाठः।

**अथ हिंसादिकस्य पापस्य पारभविकस्यापि प्रायश्चित्तप्रतिपत्तिः स्यात्, न तु उत्सूत्रभाषणजनितस्य, उत्सूत्रभाषिणो निह्नवस्य क्रियाबलाद्देवकिल्बिषिकत्वप्राप्तावपि तत्र निजकृतपापपरिज्ञानाभावेन दुर्लभबोधित्वभणनाद्।**

यदागमः—

लद्धूण वि देवत्तं उववन्नो देवकिब्बिसे।
तत्थवि से न याणइ किं मे किच्चा इमं फलं॥
तत्तोवि से चइत्ता णं लब्भिही एलमूअगं।
णरगं तिरिक्खजोणिं वा बोही जत्थ सुदुल्लहा॥

एतद्वृत्तिर्यथा—लद्धूणावित्ति। लब्ध्वाऽपि देवत्वं तथाविधक्रियापालनवशेनोपपन्नो देवकिल्बिषनिकाये, तत्राप्यसौ न जानाति विशुद्धाध्यवसायाभावात् किं मम कृत्वेदं फलं किल्बिषिकदेवत्वमिति। अस्य दोषान्तरमाह–तत्तोवित्ति। ततोऽपि देवलोकादसौ च्युत्वा लप्स्यते एडमूकताम्–अजभवानुकारि मनुष्यत्वम्, तथा नरकं तिर्यग्योनिं वा पारम्पर्येण लप्स्यते। बोधिर्यत्र सुदुर्लभा—सकलसंपत्तिनिबन्धना यत्र जिनधर्मप्राप्तिर्दुरापा।

**'प्राप्नोत्येडमूकताम्' इति वाच्ये असकृद्भवप्राप्तिख्यापनार्थं 'लप्स्यते' इति भविष्यत्कालनिर्देश इति चेद्, मैवम्, नहि तत्र निह्नव एवाधिकृतः किन्तु तपःस्तेनादिः "तवतेणे वयतेणे" इत्यादि पूर्वगाथैकवाक्यत्वात्तस्याप्युत्कृष्टफलप्रदर्शनमेतद् न तु सर्वत्र सादृश्यनियमः, अध्यवसायवैचित्र्यात्। किं चैवम्—**

१ लब्ध्वाऽपि देवत्वं उदपन्नो देवकिल्बिषिके।
तत्रापि स न जानाति किं मम कृत्वेदं फलम्॥
ततोऽपि स च्युत्वा लप्स्यते एडमूकताम्।
नरकं तिर्यग्योनिं वा बोधिर्यत्र सुदुर्लभा॥

२ तपःस्तेनो व्रतस्तेनः।

"इति से परस्स अट्टाए कराइं कम्माइं बाले पकुव्वमाणे तेण दुक्खेण मूढे विप्परियासमुवेइ"—

इत्याचाराङ्गवचनात्क्रूराणि कर्माणि परस्यार्थाय कुर्वतो हिंसाहिंसबुद्ध्यादिविपर्यासवतो हिंसादिदोषस्यापि भवान्तरे प्रायश्चित्तानुपपत्तिरेव स्यात्। अथ सर्वस्यैव पापस्य प्रमादेन कृतस्य विपर्यासाधायकत्वाद्विपर्यासजलसिच्यमानानां क्लेशपादपानां चानुबन्धफलत्वाद् भवान्तरेऽपि तथाभव्यत्वाविशेषात्कस्यचित्कदाचिद्विपर्यासनिवृत्त्यैवानुबन्धनिवृत्तेर्हिंसादिप्रायश्चित्तोपपत्तिरिति चेत्, तदिदमुत्सूत्रप्रायश्चित्तेऽपि तुल्यम्। न चैवमुत्सूत्रभाषणादनन्तसंसारानियमनात्तनो भयानुपपत्तिरिति शङ्कनीयम्, एकान्ताभावेऽपि बाहुल्योक्तफलापेक्षया हिंसादेरिवोत्सूत्रादास्तिकस्य भयोपपत्तेः। आस्तिक्यं ह्यसत्प्रवृत्तिभयनिमित्तमिति दिग्।

अनन्तसंसारिताऽशुभानुबन्धयोगादित्युक्तम्, अथाशुभानुबन्धस्य किं मूलम्? के च तद्भेदाः? इत्याह—

**तम्मूलं मिच्छत्तं अभिग्गहिआइ तं च पंचविहं।**
**भव्वाणमभव्वाणं आभिग्गहिअं वणाभोगो॥ ८॥**

तम्मूलंति। तस्यानन्तसंसारहेत्वशुभानुबन्धस्य मूलं मिथ्यात्वम्, उत्कटहिंसादिदोषानामपि मिथ्यात्वसहकृतानामेव तद्धेतुत्वात्, अन्यथा दोषक्यामूढताऽनुपपत्तेः। तच्चाभिग्रहिकादिकं पञ्चविधम् आभिग्रहिकमनाभिग्रहिकमाभिनिवेशिकं सांशयिकमनाभोगं चेति पञ्चप्रकारम्। यद्यपि जीवादिपदार्थेषु तत्त्वमिति निश्चयात्मकस्य सम्यक्त्वस्य प्रतिपक्षभूतं मिथ्यात्वं द्विविधमेव पर्यवस्यति—जीवादयो न तत्त्वमिति विपर्यासात्मकं जीवादयस्तत्त्वमिति निश्चयाभावरूपानधि-

---

तन्मूलं मिथ्यात्वमभिग्रहिकादि तच्च पञ्चविधम्।
भव्यानाम्, अभव्यानामाभिग्रहिकं वाऽनाभोगः॥ ८॥

---

१ इति स परस्यार्थाय क्रूराणि कर्माणि बालः प्रकुर्वन् तेन दुःखेन मूढो विपर्यासमुपैति।

गमात्मकं च । तदाह वाचकमुख्यः—"अनधिगमविपर्ययौ च मिथ्यात्वम्" इति, तथाऽपि 'धर्मेऽधर्मसंज्ञा' इत्येवमादयो दश भेदा इवोपाधिभेदात्पञ्चैते भेदाः शास्त्रप्रसिद्धाः । तत्राभिग्रहिकम्—अनाकलिततत्त्वस्याप्रज्ञापनीयताप्रयोजकस्वस्वाभ्युपगतार्थश्रद्धानम् । यथा बौद्धसांख्यादीनां स्वस्वदर्शनप्रक्रियावादिनाम् । यद्यपि वैतण्डिको न किमपि दर्शनमभ्युपगच्छति, तथाऽपि तस्य स्वाभ्युपगतवितण्डावादार्थ एव निबिडाग्रहवत्त्वादाभिग्रहिकत्वमिति नाव्याप्तिः । 'अनाकलिततत्त्वस्य' इति विशेषणाद् यो जैन एव धर्मवादेन परीक्षापूर्वं तत्त्वमाकलय्य स्वाभ्युपगतार्थं श्रद्धत्ते तत्र नातिव्याप्तिः । यस्तु नाम्ना जैनोऽपि स्वकुलाचारेणैवागमपरीक्षां बाधते तस्याभिग्रहिकत्वमेव, सम्यग्दृशोऽपरीक्षितपक्षपातित्वायोगात् । तदुक्तं हरिभद्रसूरिभिः—

"पक्षपातो न मे वीरे न द्वेषः कपिलादिषु ।
युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥" इति ।

यश्चागीतार्थो गीतार्थनिश्रितो माषतुषादिकल्पः प्रज्ञापाटवाभावादनाकलिततत्त्व एव स्वाभिगतार्थं जैनक्रियाकदम्बकरूपं श्रद्धत्ते तस्य स्वाभ्युपगतार्थश्रद्धानं नाप्रज्ञापनीयताप्रयोजकम्, असद्ग्रहशक्त्यभावात्, किन्तु गुणवदाज्ञाप्रामाण्यमूलत्वेन गुणवत्पारतन्त्र्यप्रयोजकमित्यप्रज्ञापनीयताप्रयोजकत्वविशेषणान्न तत्रातिव्याप्तिः । स्वपराभ्युपगतार्थयोरविशेषेण श्रद्धानमनाभिग्राहिकम् । यथा 'सर्वाणि दर्शनानि शोभनानि' इति प्रतिज्ञावतां मुग्धलोकानाम् । यद्यपि परमोपेक्षावतां निश्चयपरिकर्मितमतीनां सम्यग्दृष्टीनां स्वस्थाने सर्वनयश्रद्धानमस्ति, शिष्यमतिविस्फारणरूपकारणं विनैकतरनयार्थनिर्द्धारणस्याशास्त्रार्थत्वात् । तदाह संमतौ सिद्धसेनः—

"[1]णियवयणिज्जसच्चा सव्वणया परवियालणे मोहा ।
ते पुण न दिट्ठसमओ विभयइ सच्चे व अलिए व ॥"

---

१ निजकवचनीयसत्याः सर्वनयाः परविचालने मोहाः ।
तान् पुनर्न दृष्टसमयो विभजते सत्ये वा अलिके वा ॥
( सम्मतितर्के नयकाण्डः गा० २८ )

[ निजकवचनीये स्वांशे परिच्छेद्ये सत्याः—सम्यग्ज्ञानरूपाः सर्व एव ... ... ... ... परविचालने

तथाऽपि स्वस्वस्थानविनियोगलक्षणेन विशेषेण तेषां सर्वनय-श्रद्धानमस्तीति नातिव्याप्तिः ।

विदुषोऽपि स्वरसवाहिभगवत्प्रणीतशास्त्रबाधितार्थश्रद्धानमाभि-निवेशिकम् । स्वस्वशास्त्रबाधितार्थश्रद्धानं विपर्यस्तशाक्यादेरपीति तत्रातिव्याप्तिवारणाय भगवत्प्रणीतत्वं शास्त्रविशेषणम् । भगवत्प्र-णीतशास्त्रे बाधितार्थश्रद्धानमिति सप्तमीगर्भसमासान्नातिव्याप्तिनाद-वश्यम्, तथाऽप्यनाभोगात्प्रज्ञापकदोषाद्वा वितथश्रद्धानवति सम्य-ग्दृष्टावतिव्याप्तिः, अनाभोगाद् गुरुनियोगाद्वा सम्यग्दृष्टेरपि वितथ-श्रद्धानभणनात् । तथा चोक्तमुत्तराध्ययननिर्युक्तौ—

"[1]सम्मद्दिट्ठी जीवो उवइट्ठं पवयणं तु सद्दहइ ।
सद्दहइ असब्भावं अणाभोगा गुरुणिओगा वा ॥" (कर्मप्र.)

इति तद्वारणाय स्वरसवाहीति सम्यग्वक्तृवचनानिवर्त्तनीयत्वं तदर्थः । अनाभोगादिजनितं मुग्धश्राद्धादीनां वितथश्रद्धानं तु सम्य-ग्वक्तृवचननिवर्त्तनीयमिति न दोषस्तथाऽपि जिनभद्रसिद्धसेनादि-प्रावचनिकप्रधानविप्रतिपत्तिविषयपक्षद्वयान्यतरस्य वस्तुनः शास्त्रबाधि-तत्वात्तदन्यतरश्रद्धानवतोऽभिनिवेशित्वप्रसङ्ग इति तद्वारणार्थं विदु-षोऽपीति—शास्त्रतात्पर्यबाधप्रतिसंधानवत इत्यर्थः । सिद्धसेनादयश्च स्वस्वाभ्युपगतमर्थं शास्त्रतात्पर्यबाधं प्रतिसंधायापि पक्षपातेन न प्रति-पन्नवन्तः, किन्त्वविच्छिन्नप्रावचनिकपरम्परया शास्त्रतात्पर्यमेव स्वा-भ्युपगतार्थानुकूलत्वेन प्रतिसंधायेति न तेऽभिनिवेशिनः । गोष्ठामाहि-लादयस्तु शास्त्रतात्पर्यबाधं प्रतिसंधायैवान्यथा श्रद्धत्ते इति न दोषः ।

---

परविषयोन्मूलने मोहाः—मुह्यन्तीति मोहा मिथ्याप्रत्ययाः, परविषयस्यापि सत्यत्वेनोन्मूलयितुमशक्य-त्वात्, तदभावे स्वविषयस्याप्यव्यवस्थितेः, मतश्च परविषयस्याभावे स्वविषयस्याप्यसत्त्वात्, तत्प्रत्य-यस्य मिथ्यात्वम् । एवं तद्व्यतिरिक्तग्राहकप्रमाणस्य चाभावात् तस्मात्तानेव नयान्, पुनःशब्दस्याव-धारणार्थत्वात् । नेति प्रतिषेधो विभजनक्रियायाः । दृष्टः समयः सिद्धान्तवाच्यमनेकान्तात्मकं वस्तुतत्त्वं येन पुंसा स तथा सन् विभजते सत्येतरतया, स्वतरविषयमवधारयमाणोऽपि तथा तन्न विभजते, अपि त्वितरनयविषयसव्यपेक्षमेव स्वनयाभिप्रेतं विषयं सत्यमेवावधारयतीति यावत् । ]

[1] सम्यग्दृष्टर्जीव उपदिष्टं प्रवचनं तु श्रद्धत्ते ।
श्रद्धत्ते असद्भावमनाभोगाद् गुरुनियोगाद्वा ॥

भगवद्वचनप्रामाण्यसंशयप्रयुक्तः शास्त्रार्थसंशयः सांशयिकम्। यथा सर्वाणि दर्शनानि प्रमाणं कानिचिद्वा, इदं भगवद्वचनं प्रमाणं नवेत्यादि। संशयानां मिथ्यात्वप्रदेशोदयनिष्पन्नानां साधूनामपि सूक्ष्मार्थसंशयानां मिथ्यात्वभावो मा प्रासाङ्क्षीदिति भगवद्वचनप्रामाण्यसंशयप्रयुक्तत्वं विशेषणम्। ते च नैवंभूताः, किन्तु भगवद्वचनप्रामाण्यज्ञाननिवर्तनीयाः, सूक्ष्मार्थादिसंशये सति "तमेव सच्चं णीसंकं जं जिणेहिं पवेइयं" इत्याद्यागमोदितभगवद्वचनप्रामाण्यपुरस्कारेण तदुद्धारस्यैव साध्वाचारत्वात्। या तु शङ्का साधूनामपि स्वरसवाहितया न निवर्तते सा सांशयिकमिथ्यात्वरूपा मत्यनाचारापादिकैव। अत एव काङ्क्षामोहोदयादाकर्षसिद्धिः।

साक्षात्परम्परया च तत्त्वाप्रतिपत्तिरनाभोगम्। यथैकेन्द्रियादीनां तत्त्वातत्त्वानध्यवसायवतां मुग्धलोकानां च। यद्यपि माषतुषादिकल्पानां साधूनामपि साक्षात्तत्त्वाप्रतिपत्तिरस्ति, तथाऽपि तेषां गीतार्थनिश्रितत्वात्तद्गततत्त्वप्रतिपत्तिः परम्परया तेष्वपि सत्त्वान्न तत्रातिव्याप्तिः। तत्त्वाप्रतिपत्तिश्चात्र संशयनिश्चयसाधारणतत्त्वज्ञानसामान्याभाव इति न सांशयिकेऽतिव्याप्तिरिति दिक्।

एतच्च पञ्चप्रकारमपि मिथ्यात्वं भव्यानां भवति। अभव्यानां त्वाभिग्रहिकमनाभोगो वेति द्वे एव मिथ्यात्वे स्याताम्, न त्वनाभिग्रहिकादीनि त्रीणि; अनाभिग्रहिकस्य विच्छिन्नपक्षपाततया मलाल्पतानिमित्तकत्वाद्, आभिनिवेशिकस्य व्यापन्नदर्शननियतत्वाद्, सांशयिकस्य च सकम्पप्रवृत्तिनिबन्धनत्वाद् अभव्यानां च बाधितार्थे निष्कम्पमेव प्रवृत्तेः; अत एव भव्याभव्यत्वशङ्काऽपि तेषां निषिद्धा। तदुक्तमाचारटीकायाम्—"अभव्यस्य भव्याभव्यत्वशङ्काया अभावाद्" इति॥ ८॥

नन्वभव्यानामन्तस्तत्त्वशून्यानामनाभोगः सार्वदिको भवतु, आभिग्रहिकं तु कथं स्याद्? इति भ्रान्तस्याशङ्कामपाकर्तुमाभिग्रहिकभेदानुपदर्शयति—

---

१ तदेव सत्यं निःशङ्कं यज्जिनैः प्रवेदितम्।

णत्थि ण णिचो ण कुणइ कयं ण वेइए णत्थि णिव्वाणं ।
णत्थि मोक्खोवाओ आभिग्गहिअस्स छ विअप्पा ॥ ९ ॥

णत्थित्ति । १ नास्त्येवात्मा, २ न नित्य आत्मा, ३ न कर्ता, ४ कृतं न वेदयति, ५ नास्ति निर्वाणम् , ६ नास्ति मोक्षोपाय इत्याभिग्रहिकस्य चार्वाकादिदर्शनप्रवर्तकस्य परपक्षनिराकरणप्रवृत्तद्रव्यानुयोगसारसंमत्यादिग्रन्थप्रसिद्धाः षड् विकल्पाः, ते च सदाऽनास्तिक्यमयानामभव्यानां व्यक्ता एवेति कस्तेषामाभिग्रहिकसत्त्वे संशय इति भावः ।

इत्थं च—

" लोइअमिच्छत्तं पुण सरूवभेएण हुज्ज चउभेअं ।
अभिगहिअमणभिगहिअं संसइअं तह अणाभोगं ॥
तत्थवि जमणाभोगं अव्वत्तं सेसगाणि वत्ताणि ।
चत्तारिवि जं णियमा संन्नीणं हुंति भव्वाणं ॥ "

इति नवीनकल्पनां कुर्वन् अभव्यानां व्यक्तं मिथ्यात्वं न भवत्येवेति वदन् पर्यनुयोज्यः । ननु भोः कथमभव्यानां व्यक्तमिथ्यात्वं न भवति ?, नास्त्यात्मेत्यादिमिथ्यात्वविकल्पा हि व्यक्ता एव तेषां श्रूयन्ते । तथा—

" अभव्याश्रितमिथ्यात्वेऽनाद्यन्ता स्थितिर्भवेद् ।
सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता ॥

अभव्यानाश्रित्य मिथ्यात्वे—सामान्येन व्यक्ताव्यक्तमिथ्यात्वविषयेऽनाद्यन्ता स्थितिर्भवति । तथा सैव स्थितिर्भव्यजीवान्पुनराश्रित्यानादिसान्ता मता । यदाह—

" [3]मिच्छत्तमभव्वाणं तमणाइमणंतयं मुणेयव्वं ।
भव्वाणं तु अणाइसपज्जवसियं तु सम्मत्ते ॥ "

---

१ नास्ति न नित्यो न करोति कृतं न वेदयति नास्ति निर्वाणं ।
नास्ति मोक्षोपाय आभिग्रहिकस्य षड् विकल्पाः ॥

२ लौकिकमिथ्यात्वं पुनः स्वरूपभेदेन भवेच्चतुर्भेदम् ।
आभिग्रहिकमनाभिग्रहिकं सांशयिकं तथाऽनाभोगम् ॥
तत्रापि यदनाभोगमव्यक्तं शेषकाणि व्यक्तानि ।
चत्वार्यपि यन्नियमात् संज्ञिनां भवन्ति भव्यानाम् ॥

३ मिथ्यात्वमभव्यानां तदनाद्यनन्तकं ज्ञातव्यम् ।
भव्यानां त्वनादिसपर्यवसितं तु सम्यक्त्वे ॥

इति गुणस्थानकक्रमारोहसूत्रवृत्त्यनुसारेणाभव्यानां व्यक्तमपि मिथ्यात्वं भवतीत्यापातदृशाऽपि व्यक्तमेव प्रतीयते। अपि च पालकसंगमकादीनां प्रवचनार्हत्प्रत्यनीकानामुदीर्णव्यक्ततरमिथ्यात्वमोहनीयोदयानामेव समुद्भूता नानाविधाः कुविकल्पाः श्रूयन्ते। किं च-मोक्षकारणे धर्मे एकान्तभवकारणत्वेनाधर्मश्रद्धानरूपं मिथ्यात्वमपि तेषां लब्ध्याद्यर्थं गृहीतप्रव्रज्यानां व्यक्तमेव। यत्पुनरुच्यते—तेषां कदाचित्कुलाचारवशेन व्यवहारतो व्यक्तमिथ्यात्वे सम्यक्त्वे वा सत्यपि निश्चयतः सर्वकालमनाभोगमिथ्यात्वमेव भवतीति। तदभिनिवेशविजृम्भितम्, शुद्धयप्रतिपत्त्यभावापेक्षया निश्चयेनानाभोगाभ्युपगमे आभिग्रहिकादिस्थलेऽपि तत्प्रसङ्गाद्, बहिरन्तर्व्यक्ताव्यक्तोपयोगद्वयाभ्युपगमस्य चापसिद्धान्तकलङ्कदूषितत्वाद्।

अथ यदेकपुद्गलावशेषसंसारस्य क्रियावादित्वाभिव्यञ्जकं धर्मधिया क्रियारुचिनिमित्तं तन्मिथ्यात्वं व्यक्तम्।

यदुक्तम्—

" तेसुवि एगो पुग्गलपरिअट्टो जेसिं हुज्ज संसारो।
तहभव्वत्ता तेसिं केसिंचि होइ किरियरुई॥
तीए किरियाकरणं लिंगं पुण होइ धम्मबुद्धीए।
किरियारुईणिमित्तं जं वुत्तं वत्तमिच्छंति॥"

ततोऽन्यच्चाव्यक्तं मिथ्यात्वम्। न चाभव्यस्य कदाप्येकपुद्गलपरावर्तावशेषः संसार इति सदैव तस्याव्यक्तं मिथ्यात्वमवस्थितमिति चेद्, मैवम्, एवं सति चरमपुद्गलपरावर्तातिरिक्तपुद्गलपरावर्तवर्तिनां भव्यानामप्यव्यक्तानाभोगमिथ्यात्वव्यवस्थितावाभिग्राहिकमिथ्यात्वोच्छेदप्रसङ्गात्। किं च-एवमनाभोगमिथ्यात्वे वर्तमाना जीवा न मार्गगामिनो नवोन्मार्गगामिनो भवन्ति, अनाभोगमिथ्यात्वस्यानादिमत्त्वेन सर्वेषामपि जीवानां निजगृहकल्पत्वाद्। लोकोऽपि निजगृहे भूयःकालं

१ तेष्वपि एको पुद्गलपरावर्तो येषां भवेत्संसारः।
तथाभव्यता तेषां केषांचिद् भवेत्क्रियारुचिः॥
तया क्रियाकरणं लिङ्गं पुनर्भवति धर्मबुद्ध्या।
क्रियारुचिनिमित्तं यदुक्तं व्यक्तमिथ्यात्वमिति॥

वसन्नपि न मार्गगामी न वोन्मार्गगामीति व्यपदिश्यते, किन्तु गृहान्निर्गतः समीहितनगराभिमुखं गच्छन् मार्गगामी, अन्यथा तून्मार्गगामीति व्यपदिश्यते। एवं तथाभव्यत्वयोगेनानादिमिथ्यात्वान्निर्गतो यदि जैनमार्गमाश्रयते तदा मार्गगामी, जैनमार्गस्यैव मोक्षमार्गत्वाद्। यदि च शाक्यादिदर्शनं जमाल्यादिदर्शनं वाऽऽश्रयते तदोन्मार्गगामीति व्यपदिश्यते, तदीयदर्शनस्य संसारमार्गत्वेन मोक्षं प्रत्युन्मार्गभूतत्वादिति स्वकल्पितप्रक्रियापेक्षयाऽचरमपुद्गलपरावर्तवर्तिनः शाक्यादयोऽपि नोन्मार्गगामिनो स्युरिति, "कुप्पवयणपासंडी सव्वे उम्मग्गपट्ठिया" इत्यादि प्रवचनविरोधः। किं च-एवं धर्मधिया विरुद्धक्रियाकरणादुन्मार्गगामित्वं यथा व्यक्तमिथ्यात्वोपष्टम्भाच्चरमपुद्गलपरावर्त एव तथा धर्मधिया हिंसाकरणाद्धिंसकत्वमपि तत्रैवेत्यचरमपुद्गलपरावर्तेषु हिंसकत्वादिकमपि न स्यादिति सर्वत्र त्रैराशिकमतानुसरणे जैनप्रक्रियाया मूलत एव विलोपापत्तेर्महदसमञ्जसम्। तस्मादभव्यानामपि दूरभव्यानामिव योग्यतानुसारेणाभिग्रहिकव्यक्तमिथ्यात्वोपगमे न दोष इति मन्तव्यम्।

अथाभव्या अव्यक्तमिथ्यात्ववन्तः, अव्यवहारित्वात्, संप्रतिपन्ननिगोदजीववद्-इत्यनुमानात्तेषामव्यक्तमिथ्यात्वसिद्धिः। अव्यवहारित्वं च तेषामनन्तपुद्गलपरावर्तकालस्थायित्वात् सिध्यति। व्यावहारिकाणामुत्कृष्टसंसारस्यावलिकासंख्येयभागपुद्गलपरावर्तमानत्वात्। तदुक्तं कायस्थितिस्तोत्रे—

"अव्वहारियमज्झे भमिऊण अणंतपुग्गलपरट्टे।
कहवि ववहाररासिं संपत्तो नाह तत्थवि य॥
उक्कोसं तिरियगई-असण्णि-एगिंदि-वण-णपुंसेसु।
भमिओ आवलिअअसंखभागसमयपुग्गलपरट्टे॥"

---

१ अव्यवहारिकमध्ये भ्रान्त्वाऽनन्तपुद्गलपरावर्तान्।
कथमपि व्यवहारराशिं संप्राप्तो नाथ! तत्रापि च॥
उत्कृष्टं तिर्यग्गत्यसंज्ञ्येकेन्द्रिय-वण-नपुंसकेषु।
भ्रान्त आवलिकाऽसंख्यभागसमयपुद्गलपरावर्तान्॥

अत एवोत्कृष्टो वनस्पतिकालोऽपि प्रवचने व्यावहारिकापेक्षयै-वोक्तः। तथाहि—

“ वणस्सइकाइआणं पुच्छा, जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं—अणंता उस्सप्पिणिओसप्पिणीओ कालओ, खित्तओ अणंता लोगा असंखेज्जा पुग्गलपरिअट्टा ” इति।

इदमेव चाभिप्रेत्यास्माभिरुक्तः—

“ ववहारीणं णियमा संसारो जेसिं हुज्ज उक्कोसो।
तेसिं आवलिअअसंखभागसमपोग्गलपरट्टा ॥ ”

इ[illegible]तमदुष्टमिति चेत्। नायमप्येकान्तः, अनन्तपुद्गलपरावर्तकालस्थायित्वेनाव्यवहारित्वासिद्धेः,। व्यावहारिकाणामप्यावलिकाऽसंख्येयभागपुद्गलपरावर्तान्तरितभूयोभवभ्रमणेनानन्तपुद्गलपरावर्तावस्थानस्यापि संभवात्। तदुक्तं संग्रहणीवृत्तौ—“ एते च निगोदे वर्तमाना जीवा द्विधा—सांव्यवहारिका असांव्यवहारिकाश्च। तत्र ये सांव्यवहारिकास्ते निगोदेभ्य उद्वृत्य शेषजीवराशिमध्ये समुत्पद्यन्ते, तेभ्य उद्वृत्य केचिद् भूयोऽपि निगोदमध्ये समागच्छन्ति, तत्राप्युत्कर्षत आवलिकाऽसंख्येयभागगतसमयप्रमाणान् पुद्गलपरावर्तान् स्थित्वा भूयोऽपि शेषजीवेषु समागच्छन्ति, एवं भूयो भूयः सांव्यवहारिकजीवा गत्यागतीः कुर्वन्तीति ”। यत्पुनरत्र भूयो भूयः परिभ्रमणेऽप्युक्तासंख्येयपुद्गलपरावर्तानतिक्रम एव, आवलिकाऽसंख्येयभागपुद्गलपरावर्तानामसंख्यातगुणानामप्यसंख्यातत्वमेवेति प्रतीमो न तु भूयो भूयः शब्दाभ्यामानन्त्यकल्पनाया गन्धोऽपि, तेन भूयो भूयः परिभ्रमणेऽप्यसंख्यातत्वं तदवस्थमेव। अतस्तावता कालेन व्यावहारिकाणां सर्वेषामपि सिद्धिर्भणितेति परेण स्वमनं समाहितम्, तदपि नैकान्तरमणीयम्। एवं “ विकलेन्द्रियैकेन्द्रियेषु गतागतैरनन्तान् पुद्गलपरावर्तान् निरुद्धोऽतिदुःखितः ” इत्यादिना “ अन्यदा च कथमपि नीतोऽसावार्यदेशोद्भवमातङ्गेषु, तेभ्योऽप्यभक्ष्यभक्षणादिभिर्नरकपातादिक्रमेण रसगृद्ध्यकार्य-

---

१ वनस्पतिकायिकानां प्रश्नः, जघन्येन अन्तर्मुहूर्तमुत्कृष्टेनानन्तं कालम्-अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः, क्षेत्रत अनन्ता लोका असंख्येया पुद्गलपरिवर्ताः। इति।

२ व्यावहारिकाणां नियमात्संसारो येषां भवेदुत्कृष्टः।
तेषामावलिकासंख्यभागसमपुद्गलपरावर्ताः ॥

प्रवर्तनाभ्यामेव लीलयैव व्यावृत्त्य विधृतोऽनन्तपुद्गलपरावर्तान्" इत्यादिना महता ग्रन्थेन भुवनभानुकेवलिचरित्रादौ व्यावहारिकत्वमुपेयुषोऽपि संसारिजीवस्य विचित्रभवान्तरिततयाऽनन्तपुद्गलपरावर्तभ्रमणस्य निगदसिद्धत्वात्। तथा योगबिन्दुसूत्रवृत्तावपि नरनारकादिभावेनानादौ संसारेऽनन्तपुद्गलपरावर्तभ्रमणस्वाभाव्यमुक्तम्। तथाहि—

" अनादिरेष संसारो नानागतिसमाश्रयः।
पुद्गलानां परावर्ता अत्रानन्तास्तथा मताः॥

अनादिरविद्यमानमूलारम्भ एष प्रत्यक्षतो दृश्यमानः संसारो भवः, कीदृशः? इत्याह—नानागतिसमाश्रयः—नरनारकादिविचित्रपर्यायपात्रं वर्तते। ततश्च पुद्गलानामौदारिकादिवर्गणारूपाणां सर्वेषां परावर्ता ग्रहणमोक्षात्मका अत्र संसारेऽनन्तवारस्वभावाः, तथा तेन—समयप्रसिद्धप्रकारेण गता अतीताः। केषाम्? इत्याह—

सर्वेषामेव सत्त्वानां तत्स्वाभाव्यानियोगतः।
नान्यथा संविदे तेषां सूक्ष्मबुद्ध्या विभाव्यताम्॥

सर्वेषामेव सत्त्वानां प्राणिनां तत्स्वाभाव्यम्—अनन्तपुद्गलपरावर्तपरिभ्रमणस्वभावता तस्य नियोगो व्यापारस्तस्माद्। अत्रैव व्यतिरेकमाह—न नैव अन्यथा—तत्स्वाभाव्यनियोगमन्तरेण संविद् अवबोधो घटते। एतेषामनन्तपुद्गलपरावर्तानां सूक्ष्मबुद्ध्या निपुणाभोगेन विभाव्यताम्—अनुविचिन्त्यतामेतद्।

इति व्यावहारिकत्वेऽप्यनन्तपुद्गलपरावर्तभ्रमणसंभवात्, तेनाभव्यानामव्यावहारिकत्वसाधनमसंगतमिति द्रष्टव्यम्॥

ननु प्रज्ञापनावृत्तौ व्यावहारिकाणामुत्कर्षतोऽप्यावलिकाऽसंख्येयभागपुद्गलपरावर्तस्थितिः, तत ऊर्ध्वं चावश्यं सिद्धिरिति स्फुटं प्रतीयते। तथा च तद्ग्रन्थः—" ननु यदि वनस्पतिकालप्रमाणमसंख्येयाः पुद्गलपरावर्तास्ततो यद्गीयते सिद्धान्ते "मरुदेवीजीवो यावज्जीवभावं वनस्पतिरासीद्" इति तत्कथं स्यात्? कथं वा वनस्पतीनामनादित्वम्?, प्रतिनियतकालप्रमाणतया वनस्पतिभावस्यानादित्वविरोधात्। तथाहि—असंख्येयाः पुद्गलपरावर्तास्तेषामेव स्थानमानम्, तत एतावति कालेऽतिक्रान्ते नियमात्सर्वेऽपि कायपरावर्तं कुर्वते, यथा स्वस्थितिकाले सुरादयः। उक्तं च—

जइ पुग्गलपरिअट्टा संखाइआ वणस्सई कालो ।
तो अच्चंतवणस्सइजीवो कह नाम मरुदेवी ? ॥
हुज व वणस्सईणं अणाइअन्तमत एव हेऊओ ।
जमसंखेज्जा पोंग्गलपरिअट्टा तत्थवत्थाणं ॥
कालेणेवइएणं तम्हा कुव्वंति कायपलट्टं ।
सव्वेवि वणस्सइणो ठिइकालंते जह सुराई ॥

किंच—एवं यद्वनस्पतीनां निर्लेपनमागमे प्रतिषिद्धम्, तदपीदानीं प्रसक्तं कथम् ? इति चेद् । उच्यते—इह प्रतिसमयमसंख्येया वनस्पतिभ्यो जीवा उद्वर्तन्ते, वनस्पतीनां च कायपरिमाणमसंख्येयाः पुद्गलपरावर्ताः, ततो यावन्तोऽसंख्येयेषु पुद्गलपरावर्तेषु समयास्तैरभ्यस्ता एकसमयोद्वृत्ता जीवा यावन्तो भवन्ति तावत्परिमाणमागतं वनस्पतीनाम् । ततः प्रतिनियतपरिमाणतया सिद्धं निर्लेपनम्, प्रतिनियतपरिमाणत्वाद्, एवं गच्छता कालेन सिद्धिरपि सर्वेषां भव्यानां प्रसक्ता, तत्प्रसक्तौ च मोक्षपथव्यवच्छेदोऽपि प्रसक्तः, सर्वभव्यसिद्धिगमनानन्तरमन्यस्य सिद्धिगमनायोगात् । आह च—

“ कायठिई कालेणं तेसिमसंखिज्जयावहारेणं ।
णिल्लेवणमावण्णं सिद्धीवि य सव्वभव्वाणं ॥
पइसमयमसंखिज्जा जेणुव्वट्टंति तो तदब्भत्था ।
कायठिईए समया वणस्सईणं परिमाणं ॥ ”

---

१ यदि पुद्गलपरावर्ताः संख्यातिता वनस्पतिकालः ।
ततोऽत्यन्तवनस्पतिजीवाः कथं नाम मरुदेवी ? ॥
भवेद्वा वनस्पतीनामनाद्यन्तमत एव हेतोः ।
यदसंख्येया पुद्गलपरावर्तास्तत्रावस्थानम् ॥
कालेनैतावता तस्मात्कुर्वन्ति कायपर्यस्तम् ।
सर्वेऽपि वनस्पतयः स्थितिकालान्ते यथा सुरादिः ॥

२ कायस्थितिः कालेन तेषामसंख्येयताऽपहारेण ।
निर्लेपनमापन्नं सिद्धिरपि च सर्वभव्यानाम् ॥
प्रतिसमयमसंख्येया येनोद्वर्तन्ते ततस्तदभ्यस्ता ।
कायस्थित्या समया वनस्पतीनां परिमाणम् ॥

नियता मार्गानुसारिताहेमवः, क्रिया तु क्वचिदुभयाभिमता, क्वचिच्च स्वसमयाभिमतेत्यनियता, हेतुः परकीयसंमतेर्निजमार्गेद्धाऽहेतुत्वं वा व्युत्पन्नमभिनिविष्टं वा प्रति, न तु व्युत्पन्नमनभिनिविष्टं प्रतीति ।

यत्तु निश्चयतः परसमयबाह्यानामेव मंगम-नयसारामबहप्रमुखानां मार्गानुसारित्वं स्यात्, नान्येषामिति केषांचिन्मतम्, तत्तेषामेव प्रतिकूलम्, सद्ग्रहप्रवृत्तिजनितनैश्चयिकपरसमयबाह्यतया पतञ्जल्यादीनामप्यम्बडादीनामिव मार्गानुसारित्वाप्रतिघातात्। इयानेव हि विशेषो यदेकेषामपुनर्बन्धकत्वेन तथात्वम्, अपरेषां तु श्राद्धत्वादिनेति ॥१६॥

अयं मार्गानुसारिभावः कदा स्यात्? इत्येतत्कालमानमाह—

**मग्गाणुसारिभावो जायइ चरमंमि चेव परिअट्टे ।**
**गुणवुड्ढीए विगमे भवाभिनंदिदोसाणं ॥ १७ ॥**

मग्गाणुसारिभावोत्ति । भवाभिनन्दिदोषाणाम्—

" क्षुद्रो लोभरतिर्दीनो मत्सरी भयवान् शठः ।
अज्ञो भवाभिनन्दी स्यान्निष्फलारम्भसंगतः ॥ "

इति श्लोकोक्तानां विगमे सति गुणवृद्ध्या चरमपुद्गलपरावर्त एव मार्गानुसारिभावो भवति । अपुनर्बन्धकादेर्मार्गानुसारिप्रौढप्रज्ञानुगतस्ववचनात् तस्य चैतावत्कालमानत्वात् । अत एव च नौषधप्रयोगकालश्चरमपुद्गलपरावर्त एवोक्तो व्यवहारतः, निश्चयतस्तु ग्रन्थिभेदकालस्तत्रापि ग्रन्थिभेदकाल एव न्यूनत्वेन पुरस्कृतः । तथा चोपदेशपदसूत्रवृत्ती—

" घणमिच्छत्तो कालो एत्थ अकालो उ होइ णायव्वो ।
कालो अ अपुणबंधगपभिई धीरेहिं णिद्दिट्ठो ॥

---

मार्गानुसारिभावो जायते चरम एव परिवर्ते ।
गुणवृद्ध्या विगमे भवाभिनन्दिदोषाणाम् ॥ १७ ॥

---

१ घनमिथ्यात्वः कालोऽत्राकालस्तु भवति ज्ञातव्यः ।
कालश्चापुनर्बन्धकप्रभृतिर्धीरैर्निर्दिष्टः ॥

णिच्छयओ पुण एसो विन्नेओ गंठिभेअकालंमि ।
एयंमि विहिसयपालणाउ आरोग्गमेयाओ ”

घनं-महान्धयावत्पुण्यसकलनक्षत्रादिप्रभाप्रसरभाद्रपदाद्यमावास्या मध्यभाग-समुद्भूतान्धकारनिविडं मिथ्यात्वं—तत्त्वविपर्यासलक्षणं यत्र स तथा, कालश्चरम-पुद्गलपरावर्तव्यतिरिक्तशेषपुद्गलपरावर्तलक्षणः, अत्र-वचनौषधप्रयोगे, अकालस्तु-अकाल एव भवति ज्ञातव्यः । चरमपुद्गलपरावर्तलक्षणस्तु तथाभव्यत्वपरिपाकतो बीजाधानोद्भेदपोषणादिषु स्यादपि काल इति । अत एवाह—कालस्त्वपरः पुनर-पुनर्बन्धकप्रभृतिः । तत्रापुनर्बन्धकः “पावं ण तिव्वभावा कुणइ” इत्यादिलक्षणः, आदिशब्दान्मार्गाभिमुख-मार्गपतितौ गृह्येते । तत्र मार्गो ललितविस्तरायामस्मेव शास्त्रकर्त्रा स्वलक्षणो निरूपितः । ‘मग्गदयाणं’ इत्यालापकव्याख्यायां मार्गश्चे-तसोऽवक्रगमनम्, भुजंगमनलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रवणः स्वर-सवाही क्षयोपशमविशेषो हेतु-स्वरूप फलशुद्धासुखेत्यर्थः, तत्र पतितो भव्यविशेषो मार्गपतित इत्युच्यते, तदादिभावापन्नश्च मार्गाभिमुख इति । एतौ च चरमयथा-प्रवृत्तकरणभागभाजावेव विज्ञेयौ । अपुनर्बन्धकोऽपुनर्बन्धककालः प्रभृतिर्यस्य स तथा धीरैस्तीर्थकरादिभिर्निर्दिष्टो व्यवहारत इति । निश्चयतो निश्चयनयमतेन पुनरेष वचनौषधप्रयोगकाले विज्ञेयः । कः ? इत्याह—ग्रन्थिभेदकालस्तु ग्रन्थिभेद-काल एव, यस्मिन् कालेऽपूर्वकरणानिवृत्तिकरणाभ्यां ग्रन्थिर्भिन्ना भवति तस्मि-न्नेवेत्यर्थः । कुतः ? यत एतस्मिन् ग्रन्थिभेदे सति विधिना-अवस्थोचितकृत्यकरण-लक्षणेन, सदा सर्वकालं या पालना च वचनौषधस्य, तया कृत्वाऽऽरोग्यं—संसार-व्याधिरोधलक्षणम्, एतस्माद्वचनौषधप्रयोगाद् भवति । अपुनर्बन्धकप्रभृतिषु वचनप्रयोगः क्रियमाणोऽपि न तथा सूक्ष्मबोधविधायकः, अनाभोगबहुलत्वात्त-त्कालस्य । भिन्नग्रन्थ्यादयस्तु व्यावृत्तमोहत्वेन निपुणबुद्धितया तेषु कृत्येषु वर्त-मानास्तत्कर्मव्याधिसमुच्छेदका जायन्त इति । ग्रन्थिभेदमेव पुरस्कुर्वन्नाह—

“ इहराबि हंदि एअंमि एस आरोग्गसाहगो चेव ।
पोग्गलपरिअट्टद्धं जमूणमेअंमि संसारो ॥ ”

---

१ निश्चयतः पुनरेष विज्ञेयो ग्रन्थिभेदकाले ।
एतस्मिन् विधिशतपालनया आरोग्यमेतस्मात् ॥

२ पापं न तीव्रभावात्करोति ।

३ इतरथाऽपि खलु एतस्मिन्नेष आरोग्यसाधकश्चैव ।
पुद्गलपरावर्तार्द्धं यदूनमेतस्मिन् संसारः ॥

इतरथाऽपि विधेः सदाचाललाभान्तराण्यपि हन्तीति पूर्ववत्. एतस्मिन् ग्रन्थिभेदे कृते सत्येव वचनप्रयोग आरोग्यसाधकौषधभावारोग्यनिष्पादक एव संपद्यते । तथा च पठ्यते—

" लब्ध्वा मुहूर्तमपि ये परिवर्जयन्ति
सम्यक्त्वरत्नमनवद्यपदप्रदायि ।
यास्यन्ति तेऽपि न चिरं भववारिराशौ
तद्बिभ्रतां चिरतरं किमिहास्ति वाच्यम् ॥

अत्र हेतुमाह— पुद्गलानामौदारिक- तैजस- भाषा-ऽऽनप्राण-मनः कर्म-ग्रहणपरिणतानां विवक्षितकालमादौ कृत्वा यावतां सामस्त्येनैकजीवस्य ग्रहनिसर्गौ संपद्येते स कालः पुद्गलपरावर्त इत्युच्यते, पुद्गलग्रहणनिसर्गाभ्यां परिवर्तन्ते परापर-परिणतिं लभन्ते तस्मिन्निति व्युत्पत्तेः, तस्यार्द्धं यावद् यद् यस्मादूनं किंचिद्धी-नम्, एतस्मिन् ग्रन्थिभेदे सति संसारिजीवानां तीर्थकराद्याशातनाबहलानामपि । अत्र दृष्टान्ताः कूलवालकगोशालकादयो वाच्या इति । एवं चोत्कर्षतोऽप्यपार्ध-पुद्गलपरावर्तविशेषसंसारस्यैव मार्गानुसारित्वमिति यत्केनचिदुक्तम्, तत्केनाभि-प्रायेणेति विचारणीयं मध्यस्थैः। नह्येवमपुनर्बन्धकापेक्षया कालभेदेन ग्रन्थिभेदस्य पुरस्करणमुपपद्यते, पराभिप्रायेणापार्द्धपुद्गलावर्तकालमानस्योभयत्राविशेषाद् एवं वदतो भ्रान्तिमूलं तावच्चरमयथाप्रवृत्तकरणभागभाजामेवापुनर्बन्धकादीनामधिका-रित्वभणनम्, तादृशानां तेषां सम्यक्त्वसंनिहितत्वाद् । अत एव—

" भवहेउनाणमेयस्स पायसो सप्पवित्तिभावेणं ।
तह तयणुबंधओ चिय तत्तेपरनिंदणाइओ ॥ "

भवहेतुः संसारनिबन्धनं ज्ञानं—शास्त्राभ्यासजन्यो बोध एतस्य मिथ्यादृष्टेः, कथम् ? इत्याह—प्रायशो बाहुल्येन, असत्प्रवृत्तिभावेन—विपर्यस्तचेष्टाकरणात्, तस्य यदिह प्रायोग्रहणं तद् यथाप्रवृत्तकरणचरमविभागभाजां संनिहितग्रन्थिभे-दानामत्यन्तजीर्णमिथ्यात्वज्वराणां केषांचिद्दुःखितदया-गुणवदद्वेष-समुचिताचार-प्रवृत्तिसाराणां सुन्दरप्रवृत्तिभावेन व्यभिचारवारणार्थम् । तथेति हेत्वन्तरसमुच्चये । तदनुबन्धत एवासत्प्रवृत्त्यनुबन्धादेव । एतदपि कुतः ? इत्याह—तत्त्वेतरनिन्दना-

१ भवहेतुज्ञानमेतस्य प्रायशोऽसत्प्रवृत्तिभावेन ।
तथा तदनुबन्धत एव तत्त्वेतरनिन्दनादितः ॥

दिः । न हि मिथ्यात्वोपघातात्समुपात्तविपरीतरुचिः, सत्त्वं च सद्भूतदेवतादिकमर्हत्त्वादिलक्षणम्, 'निंद'त्ति इतरच्चातत्त्वं तत्कुयुक्तिसमुपन्यासेन पुरस्करोति ततस्तत्त्वेतरनिन्दनादितो दोषाद् भवान्तरेऽप्यसत्प्रवृत्तिरनुबन्धयुक्तस्यैव स्यादित्युपदेशपदवचनान्तरमनुसृत्यात्रानादिप्रवाहपतितस्य यथाप्रवृत्तकरणस्य चरमविभागः सम्यक्त्वप्राप्तिहेतुकर्मक्षयोपशमलक्षितावस्थाविशेषस्तद्वतां संनिहितग्रन्थिभेदानां स्वल्पकालप्राप्तव्यसम्यक्त्वानामत्यन्तजीर्णमिथ्यात्वज्वराणां सुन्दरप्रवृत्तिरिति भणनेन तद्व्यतिरिक्तानां तु सर्वेषामपि मिथ्यादृशामसुन्दरप्रवृत्तिरेवोक्तेति सूक्ष्मदृशा पर्यालोच्यमिति तेनोक्तम् । तत्रेदं विचारणीयम्--चरमत्वं यथाप्रवृत्तकरणस्यानन्तपुद्गलपरावर्तभाविनश्चरमैकावर्तमात्रेणापि निर्वाह्यम्, संनिहितग्रन्थिभेदत्वस्य तु स्वल्पकालप्राप्तव्यसम्यक्त्वाक्षेपकता ।

" आसन्ना चेयमस्योच्चैश्चरमावर्तिनो यतः ।
भूयांसोऽमी व्यतिक्रान्तास्तदेकोऽत्र न किंचन ॥

आसन्ना चाभ्यर्णवर्तिन्येव इयमुक्तिरस्योच्चैरतीवचरमावर्तिनश्चरमपुद्गलपरावर्तभाजो जीवस्य, यतः कारणात् भूयांसोऽतीवबहवोऽमी आवर्ता व्यतिक्रान्ता अनादौ संसारे व्यतीतास्तत एकोऽपश्चिमोऽत्र ' न किंचन ' न किंचिद्भयस्थानमेष इत्यर्थः "

इति योगबिन्दुसूत्रवृत्तिवचनाच्चरमावर्तिन आसन्नसिद्धिकत्वस्यापि स्वल्पकालप्राप्तव्यसिद्ध्याक्षेपकत्वापत्तेः, आपेक्षिकासन्नतया समाधानं चोभयत्र सुघटमिति

अथैकभविकाद्युचितयोग्यतानियतत्वाद् द्रव्याज्ञायाः सम्यक्त्वप्राप्त्यपेक्षया तदधिकव्यवधाने मिथ्यादृशो न मार्गानुसारितेति निश्चीयते इति चेद् । न, असति प्रतिबन्धे परिपाके वाऽपुनर्बन्धकादेर्मार्गानुसारिणोऽभावा[illegible]व्यवधानेऽपि सति प्रतिबन्धादौ तद्व्यवधानस्यापि संभवात् तत्कालेऽपि भावाज्ञाबहुमानाप्रतिघातात्, उचितप्रवृत्तिसारतया [illegible]व्याज्ञाया अविरोधाद्, अन्यथा [illegible]णाद् भावस्तवादेकभविकाद्यधिकव्यवधाने द्रव्यस्तवस्याप्यसंभवप्रसङ्गाद्, भावस्तवहेतु[illegible] द्रव्यस्तवत्वप्रतिपादनात् । तदुक्तं पञ्चाशके—

ता भावत्थयहेऊ जो सो दव्वत्थओ इहं इट्ठो ।
जो उण णेवं भूओ स अप्पहाणो परं होइ ॥" इति ।

यदि च भावलेशयोगादव्यवहितस्यापि द्रव्यस्तवत्वमविरुद्धं तदा तत एव तादृशस्य मार्गानुसारिणो द्रव्याज्ञाप्यविरुद्धैव । यथाहि—निर्निदानं सूत्रविधिलक्षणेन भावस्तवानुरागलक्षणेन वा प्रकारेण जिनभवनाद्युचितानुष्ठानस्य द्रव्यस्तवत्वमव्याहतम्, एकान्तेन भावशून्यस्यैव विपरीतत्वात् । तथा अपुनर्बन्धकस्यापि भावाज्ञानुराग-भावलेशयुक्तस्य व्यवधानेऽपि द्रव्याज्ञाया न विरोध इति । अत एव भवाभिष्वङ्गानाभोगासंगतत्वात् अन्यावर्तापेक्षया विलक्षणमेव चरमावर्ते गुरुदेवादिपूजनं व्यवस्थितम् । तदुक्तं योगबिन्दौ—

एतद् युक्तमनुष्ठानमन्यावर्तेषु तद् ध्रुवम् ।
चरमे त्वन्यथा ज्ञेयं सहजाल्पमलत्वतः ॥
एकमेव ह्यनुष्ठानं कर्तृभेदेन भिद्यते ।
सरुजेतर भेदेन भोजनादिगतं यथा ॥
इत्थं चैतद् यतः प्रोक्तं सामान्येनैव पञ्चधा ।
विषादिकमनुष्ठानं विचारेऽत्रैव योगिभिः ॥
विषं गरोऽननुष्ठानं तद्धेतुरमृतं परम् ।
गुर्वादिपूजाऽनुष्ठानमपेक्षादिविधानतः ॥
विषं लब्ध्याद्यपेक्षात इदं सच्चित्तमारणात् ।
महतोऽल्पार्थनाद् ज्ञेयं लघुत्वापादनात्तथा ॥
दिव्यभोगाभिलाषेण गरमाहुर्मनीषिणः ।
एतद्विहितनीत्यैव कालान्तरनिपाननात् ॥
अनाभोगवतश्चैतदननुष्ठानमुच्यते ।
संप्रमुग्धं मनोऽस्येति ततश्चैतद् यथोदितम् ॥
एतद्रागादिदं हेतुः श्रेष्ठो योगविदो विदुः ।
सदनुष्ठानभावस्य शुभभावांशयोगतः ॥
जिनोदितमिति त्वाहुर्भावसारमदः पुनः ।
संवेगगर्भमत्यन्तममृतं मुनिपुङ्गवाः ॥

एवं च कर्तृभेदेन चरमेऽन्यादृशं स्थितम् ।
पुद्गलानां परावर्ते गुरुदेवादिपूजनम् ॥
यतो विशिष्टकर्ता यां तदन्येभ्यो नियोगतः ।
तद्योगयोग्यतो भेदादिति सम्यग् विचिन्त्यताम् ॥

अत्र पूर्वं ह्येकान्तेन योगायोग्यस्यैव देवादिपूजनमासीत्, चरमावर्ते तु समुल्लसितयोगायोग्यभावस्येति । चरमावर्तदेवादिपूजनस्यान्यावर्तदेवादिपूजनादन्यादृशत्वमिति वृत्तिकृद् विवृतवानेतेन । यत्त्वन्यतीर्थिकाभिमताकरणनियमादेः सुन्दरत्वेन भणनं तद् हिंसाद्यासक्तजनस्य मनुष्यत्वस्येव स्वरूपयोग्यतया व्यवहारतो मन्तव्यम् । निश्चयतस्तु मिथ्यादृगकरणनियमो हिंसाद्यासक्तजनमनुष्यत्वं चेत्युभयमपि संसारकारणत्वेनानर्थहेतुत्वादसुन्दरमेवेति यत्केनचिदुक्तम्, तदपास्तम् । नह्येतादृशं वचनमभिनिवेशं विना संभवति, यतः पूर्वसेवाऽपि मुक्त्यद्वेषादिसंगता चरमावर्तभाविनी, निश्चयतः प्राच्यावर्तभाविनस्तद्विलक्षणा योगयोग्यतयाऽऽचार्यैरतिशयितोक्ता, किं पुनरकरणनियमस्य साक्षाद् योगाङ्गस्य वक्तव्यमिति । नहि मनुष्यत्वसदृशमकरणनियमादिकम्, अन्येषामपि सदाचाररूपस्य तस्य सामान्यधर्मप्रविष्टत्वात्, सामान्यधर्मस्य च भावलेशसंगतस्य विशेषधर्मप्रकृतित्वात्, मनुष्यत्वं चानीदृशम् । किं च—हिंसाद्यासक्तमनुष्यत्वस्थानीयं यदि मिथ्यात्वविशिष्टमकरणनियमादिकं तदा मेघकुमारजीवहस्त्यादिदयाऽपि तादृशी स्याद्, उत्कटमिथ्यात्वविशिष्टस्य तस्य तथात्वे चेष्टापत्तिः, अपुनर्बन्धकादीनामुत्कटमिथ्यात्वाभावात्पूर्वसेवायामपि च तेषामेवाधिकृतत्वात् । तदुक्तम्—

"अस्यैषा मुख्यरूपा स्यात्पूर्वसेवा यथोदिता ।
कल्याणाशययोगेन शेषस्याप्युपचारतः ॥" इति ।

न चापुनर्बन्धकादेरपि न सम्यगनुष्ठानमिति शङ्कनीयम्,

"सम्माणुट्ठाणं चिय ता सव्वमिणंति तत्तओ णेयं ।
ण य अपुणबंधगाइं मुत्तुं एयं इहं होइ ॥"

---

१ सम्यगनुष्ठानमेव तस्मात्सर्वमिदं तत्त्वतो ज्ञेयम् ।
न चापुनर्बन्धकादिं मुक्त्वा एतदिह भवति ॥

सम्यगनुष्ठानमेवाज्ञानुकूलाचरणमेव, तत्—तस्मात्सर्वं त्रिप्रकारमपि इदमनुष्ठानं तत्त्वतः—पारमार्थिकव्यवहारनयदृष्ट्या ज्ञेयम्। अत्र हेतुमाह—'न' नैव, यतोऽपुनर्बन्धक-मार्गाभिमुख-मार्गपतितान् मुक्त्वा एतदनुष्ठानमिहैतेषु जीवेषु भवति 'अपुनर्बन्धकादयश्च सम्यगनुष्ठानवन्त एव'—इति उपदेशपदसूत्रवृत्तिवचनाद् अपुनर्बन्धकादेः सम्यगनुष्ठाननियमप्रतिपादनात् त्रिप्रकारं चानुष्ठानं सतताभ्यास-विषयाभ्यास-भावाभ्यासभेदात्। तत्र नित्यमेवोपादेयतया लोकोत्तरगुणावाप्तियोग्यतापादकमातापितृविनयादिवृत्तिः सतताभ्यासः। विषयेऽर्हल्लक्षणे मोक्षमार्गस्वामिनि वा विनयादिवृत्तिः स विषयाभ्यासः। दूरं भवादुद्विग्नस्य सम्यग्दर्शनादीनां भावानामभ्यासश्च भावस्याभ्यास इति। तत्र निश्चयतो मोक्षानुकूलभावप्रतिबद्धत्वाद् विषयगतमेवेत्यपुनर्बन्धकादिः सम्यगनुष्ठानवानेवेति योगमार्गोपनिषद्विद्', येन चात्यन्तं सम्यक्त्वाभिमुख एव मिथ्यादृष्टिर्मार्गानुसारी गृह्यते, तेनादिधार्मिकप्रतिक्षेपाद् अपुनर्बन्धकादयस्त्रयो धर्माधिकारिण इति मूलप्रबन्ध एव न ज्ञातः, सम्यक्त्वाभिमुखस्यैवापुनर्बन्धकस्य पृथग्गणने चारित्राभिमुखादीनामपि पृथग्गणनापत्त्या विभागव्याघातात्। तस्माद् यथा चारित्राद्व्यवहितस्यापि सम्यग्दृशः शमसंवेगादिना सम्यग्दृष्टित्वं निश्चीयते, तथा सम्यक्त्वाद् व्यवहितस्यापुनर्बन्धकादेरपि तल्लक्षैस्तद्भावो निश्चेयः। तल्लक्षणप्रतिपादिका चेयं पञ्चाशकगाथा—

"[1]पावं ण तिव्वभावा कुणइ ण बहु मन्नइ भवं घोरं।
उचियट्ठिइं च सेवइ सव्वत्थवि अपुणबंधो॥" त्ति।

एतद्वृत्तिर्यथा—पापमशुद्धं कर्म, तत्कारणत्वाद् हिंसाद्यपि पापं तद् 'न' नैव तीव्रभावाद् गाढं संक्लिष्टपरिणामात्करोति विधत्ते, अत्यन्तोत्कटमिथ्यात्वादिक्षयोपशमेन लब्धात्मनैर्मल्यविशेषत्वाद्। तीव्रेति विशेषणादापन्नमतीव्रभावात्करोत्यपि, तथाविधकर्मदोषात्। तथा 'न बहु मन्यते' न बहु मानविषयी करोति 'भवं' संसारं 'घोरं' रौद्रम्, तस्य घोरत्वावगमात्। तथा उचितस्थितिम्—अनुरूपप्रतिपत्तिम्, चशब्दः समुच्चये, सेवते-भजते, कर्मलाघवात् सर्वत्रापि, आस्तामेकत्र, देशकालावस्थापेक्षया समस्तेष्वपि देवातिथि-माता-पितृप्रभृतिषु,

---

१ पापं न तीव्रभावात्करोति, न बहु मन्यते भवं घोरम्।
उचितस्थितिं च सेवते सर्वत्रापि अपुनर्बन्धः॥

मार्गानुसारिताऽभिमुखत्वेन मयूरशिशुदृष्टान्तादपुनर्बन्धक उक्तनिर्वचनो जीव इत्येवंविधक्रियालिङ्गो भवतीति गाथार्थ इति ।

न चापुनर्बन्धकस्य क्वचिन्मार्गानुसारितायाः क्वचिच्च तदभिमुखत्वदर्शने भ्रमकलुषितं चेतो विधेयम्, द्रव्यभावयोगाभिप्रायेणोभयाभिधानाविरोधात् । एतेन 'मार्गानुसारित्वात्' इत्यत्र धर्मबिन्दुप्रकरणे मार्गस्य सम्यग्ज्ञानादेर्मुक्तिपथस्यानुवर्तनादिति व्याख्यानात्, वन्दारुवृत्तावपि 'मग्गाणुसारिअ'त्ति असद्ग्रहपरित्यागेनैव तत्त्वप्रतिपत्तिर्मार्गानुसारितेत्येव व्याख्यानाद् मिथ्यादृष्टेरकरणनियमादिकारिणोऽपि मार्गानुसारित्वमित्यपास्तम्, पराभिमतस्य सम्यक्त्वाभिमुखस्येवापुनर्बन्धकादेः सर्वस्यापि धर्माधिकारिणो योग्यतया तत्त्वप्रतिपत्तेर्मार्गानुसारिताया अप्रतिघातात्, मुख्यतत्त्वप्रतिपत्तेश्च मेघकुमारजीवहस्त्यादावप्यपि वक्तुमशक्यत्वात् । तस्मात्संगमनयसारादिवदतिसंनिहितसम्यक्त्वप्राप्तीनामेव मार्गानुसारित्वमिति मुग्धप्रतारणमात्रम्, अपुनर्बन्धकादिलक्षणवतामेव तथाभावाद्, अन्यथा तादृशसंनिहितत्वानिश्चयेऽपुनर्बन्धकाद्युद्देशेनादिधार्मिकाचाराद्युपदेशोऽप्युच्छिद्येतेति सकलजैनप्रक्रियाविलापापत्तिः । किं च-बीजादीनां चरमपुद्गलपरावर्तभावित्वस्य तत्प्राप्तावुत्कर्षत एकपुद्गलपरावर्तकालमानस्य तेषां सान्तरनिरन्तरत्वभेदस्य च प्रतिपादनाच्च सम्यक्त्वातिसंनिहितमेव मार्गानुसारित्वं भवतीति नियमः श्रद्धेयः । तदुक्तं पञ्चविंशिकायाम्-

बीजाइकमेण पुणो जायइ एसुत्थ भव्वसत्ताणं ।
णियमा न अन्नहा वि हु इट्ठफलो कप्परुक्खुव्व ॥ १ ॥
बीजं विमस्स णेयं दट्ठूणं एयकारिणो जीवे ।
बहुमाणसंगयाए सुद्धपसंसाइ करणिच्छा ॥ २ ॥
तीए चेवणुबंधो अकलंको अंकुरो इहं णेओ ।

१ बीजादिक्रमेण पुनर्जायते एषोऽत्र भव्यसत्त्वानाम् ।
नियमाद् नान्यथाऽपि खलु इष्टफलः कल्पवृक्ष इव ॥ १ ॥
बीजमस्य ज्ञेयं दृष्ट्वा एतत्कारिणो जीवान् ।
बहुमानसंगतायाः शुद्धप्रशंसायाः करणेच्छा ॥ २ ॥
तस्याश्चैवानुबन्धोऽकलङ्कोऽङ्कुर इह ज्ञेयः ।

कहं पुण विण्णेयो तदुवायन्नेसणा चित्ता ॥ ३ ॥
तेसु पवत्ती य तहा चित्ता पत्ताइ सरसिगा होइ ।
तस्संपत्ती पुप्फं गुरुसंजोगाइरूवं तु ॥ ४ ॥
तत्तो सुदेसणाईहिं होइ जो भावधम्मसंपत्ती ।
तं फलमिह विन्नेयं परमफलपसाहगं णियमा ॥ ५ ॥
बीजस्सावि संपत्ती जायइ चरमंमि चेय परिअट्टे ।
अच्चंतसुंदरा जं एसावि तओ ण सेसेसु ॥ ६ ॥
ण य एअंमि अणंतो जुज्जइ णेयस्स णाम कालुत्ति ।
उस्सप्पिणी अणंता हुंति जओ एगपरिअट्टे ॥ ७ ॥
बीजाइआ य एए तहा तहा संतरेतरा णेया ।
तहभव्वत्तखित्ता एगंतसहाव बाहाए ॥ " त्ति ॥ ८ ॥

एतेन यदुच्यते केनचिद् बीजादिप्राप्तौ मार्गानुसार्या सम्यक्त्वोपलम्भे संज्ञित्वमेव न व्यभिचरतीति ' तदपास्तं द्रष्टव्यम् ॥ " सण्णीणं पुच्छा-गोयमा ! जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं सागरोवमसतपुहुत्तं सातिरेगं । " इत्यागमवचनात्संज्ञिकालस्योत्कर्षतः सातिरेकसागरोपमशतपृथक्त्वमानत्वाद् , अपुनर्बन्धकपदस्यापुनर्बन्धकत्वेनोत्कृष्टकर्मस्थितिक्षपणार्थपर्यालोचनायामप्येतदधिकसंसारावश्यकत्वाद् बीजादिप्राप्तपूर्व्यप्येकपुद्गलपरावर्तनियतानन्तोत्सर्पिण्यवसर्पिणीरूपकालमाननिर्देशात् ।

---

१ काथं पुनर्विज्ञेयस्तदुपायान्वेषणा चित्रा ॥ ३ ॥
तेषु प्रवृत्तिश्च तथा चित्रा............
तत्संप्राप्तिः पुष्पं गुरुसंयोगादिरूपं तु ॥ ४ ॥
ततः सुदेशनादिभिर्भवति यो भावधर्मसंप्राप्तिः ।
तत्फलमिह विज्ञेयं परमफलप्रसाधकं नियमात् ॥ ५ ॥
बीजस्यापि संप्राप्तिर्जायते चरम एव परावर्त्ते ।
अत्यन्तसुन्दरा यदेषाऽपि न शेषेषु ॥ ६ ॥
न चैतस्मिन् अनन्तो युज्यते नैतस्य नाम काल इति ।
उत्सर्पिण्योऽनन्ता भवन्ति यत एकपरावर्ते ॥ ७ ॥
बीजादिकाश्च ज्ञेया तथा तथा सान्तरेतरा ज्ञेया ।
तथाभव्यत्वाक्षिप्ता एकान्तस्वभावबाधया ॥ इति ॥ ८ ॥

२ संज्ञिनां प्रश्नः—गौतम ! जघन्येनान्तर्मुहूर्तम् , उत्कर्षेण सागरोपमशत पृथक्त्वं सातिरेकम् ।

न च पञ्चमारके ज्ञानपञ्चकसद्भावाभिधायकग्रही आदिप्राप्तौ चरम-पुद्गलपरावर्तकालमानाभिधानेऽपि नोत्कर्षतस्तावदनन्तरं तस्य लभ्यते इति वाच्यम्, बीजादिप्राप्तौ चरमावर्तमान एव संसार इति परिपाक्या-क्षेपकालस्यैव लाभादधिकरणकालमानाभिप्रायेणेत्थमभिधानासंभवात् अन्यथा सम्यक्त्वेऽप्येतावान् संसार इति वचनस्याप्यनर्थकत्व-प्रसङ्गात्। किं च—

" अचरमपरिअट्टेसुं कालो भवबालकालओ भणिओ।
चरमो अ धम्मजुव्वणकालो तह चित्तभेओत्ति ॥ "

" ता बीजपुव्वकालो णेओ भवबालकाल एवेह।
इयरो उ धम्मजुव्वणकालो विहिलिंगगम्म त्ति ॥ "—

इत्येतच्चतुर्थपञ्चमविंशिकागाथाद्वयार्थविचारणया बीजकालस्य चरमावर्तमानत्वमेव सिध्यति ॥

अपि च—

" नवनीतादिकल्पस्तद्भावेऽत्र निबन्धनम्।
पुद्गलानां परावर्तश्चरमो न्यायसंगतः ॥ "

इति योगबिन्दुवचनाच्चरमावर्तस्य घृतादिपरिणामस्थानीये योगे म्रक्षणादिस्थानीयत्वसिद्धौ सत्यन्यकारणसाम्राज्येऽपार्द्धपुद्गलपरावर्त-मध्ये सम्यक्त्वादिगुणानामिव चरमावर्तमध्ये बीजोचितगुणानामप्युत्पत्तिः कदाप्यविरुद्धैव, कालप्रतिबन्धाभावादिति व्यक्तमेव प्रतीयते। अत एव हि भोगाद्यर्थं यमनियमाराधनरूपां कापिलादिभिरभ्युपगतां पूर्वसेवाम्—

" अत एव हि निर्दिष्टा पूर्वसेवाऽपि या परैः।
सासन्न्यगतामन्ये भवाभिष्वङ्गभावतः ॥ "—

---

१ अचरमपरावर्तेषु कालो भवबालकालको भणितः।
चरमश्च धर्मयौवनकालस्तथा चित्रभेद इति ॥
तस्माद् बीजपूर्वकालो ज्ञेयो भवबालकाल एवेह।
इतरस्तु धर्मयौवनकालो विधिलिङ्गगम्य इति ॥

इति ग्रन्थेन [illegible] हरिभद्रसूरिभिरुक्त-त्वात्, मार्गाभिमुखजीवानां अपार्द्धपुद्गलपरावर्तादिमानस्य पासन्नोप-लक्षणाय [illegible]कालनियमेनैवाभिधत्ते ग्रन्थकार इति । अपि च—“ मनागपि हि तन्निवृत्तौ तस्यापुनर्बन्धकत्वमेव स्यात् ”—इति वचनात् मना-गपि संसारासक्तिनिवृत्तौ जीवस्यापुनर्बन्धकत्वं सिध्यति, तन्निवृत्तिश्च मुक्त्यद्वेषेणापि स्यात्, तस्य च चरमपुद्गलपरावर्तव्यवधानेनापि मोक्ष-हेतुत्वमुक्तम् । तथा च योगबिन्दुसूत्रवृत्तौ—

“ नास्ति येषामयं तत्र तेऽपि धन्याः प्रकीर्तिताः ।
भवबीजपरित्यागात्तथा कल्याणभागिनः ॥

‘ न ’ नैव, ‘ अस्ति ’ विद्यते, ‘ येषां ’ भव्यविशेषाणाम्, ‘ अयं ’ द्वेषः, ‘ तत्र ’ मुक्तौ, ‘ तेऽपि ’ किंपुनस्तत्रानुरागभाज इत्यपिशब्दार्थः, ‘ धन्याः ’ धर्मधनलब्धाः प्रकीर्तिताः । पुनरपि कीदृशाः ? इत्याह—‘ भवबीजपरित्यागात् ’ मनाक् स्वगतसंसारयोग्यतापरिहाणेः सकाशात्, ‘ तथा ’ तेनप्रकारेण चरम-पुद्गलपरावर्तव्यवधानादिना; ‘ कल्याणभागिनः ’ तीर्थकरादिपदप्राप्तिद्वारेण शिवधर्मभाज इति ॥ ”

तथा च चरमपुद्गलपरावर्तवर्तिनां मुक्त्यद्वेषतद्रागाक्षुद्रतादि-गुणवतां गलितकदाग्रहाणां सम्यक्त्व[illegible]निश्चयव्यवधानविशेषेऽपि सर्वेषामपुनर्बन्धकादीनामविशेषेण मार्गानुसारित्वमङ्गीकर्तव्यम् ।

यत्तु “ पढमकरणोवरि तहा अणहिनिविट्ठाण संगया एसा ”—इति वचनात्प्रथमकरणोपर्यैव ह्यतत्त्वाभिनिवेशिनो भवन्तीति । ‘ प्रथमकरणो-परि वर्तमानानामपुनर्बन्धकादीनां शुद्धवन्दना भवति ’ इत्यभिधाय—

“ णो भावओ इमीए परोवि हु अवड्ढपोग्गला अहिगो ।
संसारो जीवाणं हंदि पसिद्धं जिणमयंमि ॥ ”

इत्यनेन ग्रन्थेन शुद्धाध्यवसाय[illegible]द्धायां वन्दनायां सत्यामुत्कृष्टोऽप्यपार्द्धपुद्गलावर्ताधिकः संसारो जीवानां न भवतीति पञ्चाशके प्रो-

१ प्रथमकरणोपरि तथाऽनभिनिविष्टानां संगता एषा ॥
२ नो भावतोऽस्याः परोऽपि खलु अपार्द्धपुद्गलादधिकः ।
संसारो जीवानामेव प्रसिद्धं जिनमते ॥

चनात्, नाऽपुनर्बन्धकस्यावस्थाभेदेन विचित्रत्वाद् विधिशुद्धजैनक्रिया-ऽऽराधकमपुनर्बन्धकमधिकृत्यावसेयम्; सर्वस्यापुनर्बन्धकस्य प्रागुक्त-युक्त्यैतावत्कालमानानियमाद् भावशुद्धजैनक्रियाया एव एतावत्काल-नियतत्वात्। अत एवास्मिन्नर्थे—

"कालमणंतं च सुए अद्धा परिअट्टओ अ देसूणो।
आसायणबहुलाणं उक्कोसं अंतरं होइ॥"—

इति संमतिरप्योद्भावितं वृत्तिकृता। मोक्षार्थितया क्रियमाणा हि विधिशुद्धा जैनक्रिया उत्कर्षत एतावत्कालव्यवधानेन मोक्षं प्राप-यतीति विषयविशेष एषः। भवति च भावाविशेषेऽपि विषयविशेषा-त्फलविशेषः, सामान्यसाधु-भगवद्दानादौ तद्दर्शनादिति श्रद्धेयम्। न चेदेवं तदा स्वतन्त्रान्यतन्त्रसिद्धक्रियाकार्यपुनर्बन्धकभेदो न स्यादिति भावनीयं सुधीभिः।

यदपि बीजाधानमपि ह्यपुनर्बन्धकस्य, न चास्यापि पुद्गलपरावर्तः संसार इति भगवतां सर्वसत्त्वनाथत्वेऽन्यतरस्माद् भगवतो बीजाधा-नादिसिद्धेरल्पेनैव कालेन सर्वभव्यमुक्तिः स्यादित्यत्र हेतुतयोक्तं तदपि भगवत्प्रदेयविचित्रबीजापेक्षया। अत एव पूर्वसेवादेः पृथग्गण-नया बीजाधाने पुद्गलपरावर्ताभ्यन्तरसंसारभणनोपपत्तिः, अन्यथाऽ-ल्पतरकालाक्षेपकतया, न चास्याप्यपार्द्धपुद्गलपरावर्ताधिकः संसार इत्येवोपन्यसनीयं स्यादिति सूक्ष्मधिया विभावनीयम्।

ये तु वदन्ति—"मिथ्यादृष्टीनां मार्गानुसारित्वाभ्युपगमे तेषां गुणवत्त्वावश्यंभावाद् मिथ्यात्वेऽपि गुणश्रेण्यभ्युपगम प्रसङ्गः"। न चैतदिष्टम्, सम्यक्त्वप्रतिपत्तिमारभ्यैव कर्मग्रन्थादौ गुणश्रेण्यभिधा-नादिति तेषामृजुबुद्धीनां हरिभद्राचार्योपदर्शिताऽन्वर्थगुणस्थानपद-प्रवृत्तिरेव मिथ्यात्वेऽपि गुणसद्भावसाक्षिणी गुणश्रेणी च धर्मपृच्छादौ मिथ्यादृशामपि सम्यक्त्वोत्पत्त्याद्युपलक्षितैव द्रष्टव्या। यदाचारवृत्ति-कृद्—"इह मिथ्यादृष्टयो देशोनकोटीकोटिकर्मस्थितिकाश्च ग्रन्थिकसत्त्वा ये

१ कालमनन्तं च श्रुते अर्धपरिवर्तश्च देशोनः।
आशातनाबहुलानामुत्कृष्टमन्तरं भवति॥

कर्मनिर्जरामाश्रित्य तुल्याः, धर्मपृच्छनोत्पन्नसंज्ञास्तेभ्योऽसंख्येयगुणनिर्जरकः, ततोऽपि पिपृच्छिषुः सत्साधुजिगमिषुः, तस्मादपि क्रियाऽऽविष्टः प्रतिपद्यमानः, तस्मादपि पूर्वप्रतिपन्नोऽसंख्येयगुणनिर्जरकः इति" सम्यक्त्वोत्पत्तिव्याख्यानेति। यदि चैतद्वचनबलादेव चारित्रादाविव सम्यक्त्वेऽप्यभिमुख-प्रतिपद्यमान-प्रतिपन्नत्रयस्यैव गुणश्रेणिसद्भावात् सम्यक्त्वानभिमुख-मिथ्यादृष्टेर्न मार्गानुसारित्वमित्याग्रहस्तदा संगम-नयसारादेरपि मार्गानुसारित्वं न स्यात्। न हि भवान्तरव्यवधानेऽपि गुणश्रेण्यनुकूल-माभिमुख्यं संभवतीति सम्यक्त्वादिनियतगुणश्रेणिं विनाऽपि मिथ्या-दृशामप्यल्पमोहमलानां संसारप्रतनुताकारिणी दयादानादिगुणपरिण-तिर्मार्गानुसारितानिबन्धनं भवतीति प्रतिपत्तव्यम्। अत एव—

" भवाभिनन्दिदोषाणां प्रतिपक्षगुणैर्युतः।
वर्द्धमानगुणः प्रायो ह्यपुनर्बन्धको मतः ॥ "

इति योगबिन्दावुक्तम्, । अपुनर्बन्धकश्च प्रथमगुणस्थानावस्था-विशेष इति तत्र सर्वथा गुणप्रतिक्षेपवचनं निर्गुणानामेवेति मन्तव्यम् ॥ १७ ॥

तदेवं मार्गानुसारिभावस्य कालमानमुक्तम्, अथानेन सदाचार-क्रियारूपेण ज्ञानदर्शनयोगायोगाभ्यां यथा चतुर्भङ्गी निष्पद्यते तथाऽऽह

## एअम्मि नाणदंसणजोगाजोगेहिं देससव्वकओ।
## चउभंगो आराहगविराहगत्तेसु सुअसिद्धो ॥१८॥

एअम्मित्ति। एतस्मिन्— मार्गानुसारिभावे सदाचारक्रियारूपे ज्ञानदर्शनयोगायोगाभ्यामाराधकत्वविराधकत्वयोर्देशसर्वकृतश्चतुर्भङ्ग-समाहारः श्रुतसिद्धः। तथाहि— १ मार्गानुसारिक्रियावान् ज्ञानद-र्शनहीनश्च देशाराधक इति प्रथमो भङ्गः। २ ज्ञानदर्शनसंपन्नः क्रिया-हीनश्च देशविराधक इति द्वितीयः। ३ ज्ञानदर्शनसंपन्नः क्रियासंपन्नश्च

एतस्मिन् ज्ञानदर्शनयोगायोगाभ्यां देशसर्वकृतः।
चतुर्भङ्गमाराधकविराधकत्वयोः श्रुतसिद्धः ॥ १८ ॥

सर्वाराधक इति तृतीयः । ४ ज्ञानदर्शनासंपन्नः क्रियाहीनश्च सर्वविराधक इति चतुर्थः । तथा च भगवतीसूत्रम्—

" एवं खलु मए चत्तारि पुरिसजाया पण्णत्ता । तं जहा– १ सीलसंपन्ने णामं एगे णो सुअसंपन्ने । २ सुअसंपन्ने णामं एगे णो सीलसंपन्ने । ३ एगे सीलसंपन्नेवि सुअसंपन्नेवि । ४ एगे णो सुअसंपन्ने णो सीलसंपन्ने ॥ तत्थ णं जे से पढमे पुरिसजाए से णं पुरिसे सीलवं असुअवं, उवरए अविण्णायधम्मे । एस णं गोअमा ! मए पुरिसे देसाराहए पण्णत्ते । तत्थ णं जे से दुच्चे पुरिसजाए से णं पुरिसे असीलवं सुअवं, अणुवरए विण्णायधम्मे । एस णं गोअमा ! मए पुरिसे देसविराहए पण्णत्ते । तत्थ णं जे से तच्चे पुरिसजाए से णं पुरिसे सीलवं सुअवं, उवरए विण्णायधम्मे । एस णं गोअमा ! मए पुरिसे सव्वाराहए पण्णत्ते । तत्थ णं जे से चउत्थे पुरिसजाए से णं पुरिसे असीलवं असुअवं, अणुवरए अविण्णायधम्मे । एस णं गोअमा मए पुरिसे सव्वविराहए पण्णत्तेत्ति " ॥

एतद्वृत्तिर्यथा—एवमित्यादि । एवं वक्ष्यमाणन्यायेन, 'पुरिसजाए'त्ति पुरुषप्रकारः । 'सीलवं असुवं'ति, कोऽर्थः—'उवरए अविण्णायधम्मे'त्ति उपरतो निवृत्तः स्वबुद्ध्या पापात्, अविज्ञातधर्मा भावतोऽनधिगतश्रुतज्ञानो बालतपस्वीत्यर्थः, गीतार्थानिश्रिततपश्चरणरतोऽगीतार्थ इत्यन्ये । 'देसाराहए'त्ति स्तोकमंशं मोक्षमार्गस्याराधयतीत्यर्थः, सम्यग्बोधरहितत्वात् क्रियापरत्वाच्चेति । 'असीलवं सुअवं'ति कोऽर्थः—'अणुवरए विण्णायधम्मे'त्ति पापादनिवृत्तो विज्ञातधर्मा चाविरतिसम्यग्दृष्टिरिति भावः । 'देसविराहए'त्ति स्तोकमंशं ज्ञानादित्रयरूपस्य मोक्षमार्गस्य तृतीयभागरूपं चारित्रं विराधयतीत्यर्थः, प्राप्तस्य तस्यापालनाद्

१ एवं खलु मया चत्वारः पुरुषजाताः प्रज्ञप्ताः । तद् यथा— १ शीलसंपन्नो नाम एको नो श्रुतसंपन्नः । २ श्रुतसंपन्नो नाम एको नो शीलसंपन्नः । ३ एकः शीलसंपन्नोऽपि श्रुतसंपन्नोऽपि । ४ एको नो श्रुतसंपन्नो नो शीलसंपन्नः । तत्र यः स प्रथमः पुरुषजातः स पुरुषः शीलवान् अश्रुतवान्, उपरतोऽविज्ञातधर्मा । एष गौतम ! मया पुरुषो देशाराधकः प्रज्ञप्तः । तत्र यः स द्वितीयः पुरुषजातः स पुरुषः अशीलवान् श्रुतवान्, अनुपरतो विज्ञातधर्मा । एष गौतम ! मया पुरुषो देशविराधकः प्रज्ञप्तः । तत्र यः स तृतीयः पुरुषजातः स खलु पुरुषः शीलवान् श्रुतवान्, उपरतो विज्ञातधर्मा । एष खलु गौतम ! मया पुरुषः सर्वाराधकः प्रज्ञप्तः । तत्र खलु यः स चतुर्थपुरुषजातः स खलु पुरुषोऽशीलवान् अश्रुतवान्, अनुपरतोऽविज्ञातधर्मा । एष खलु गौतम ! मया पुरुषः सर्वविराधकः प्रज्ञप्त इति ॥

अप्राप्तेर्वा । 'सव्वाराहए'त्ति सर्वं त्रिप्रकारमपि मोक्षमार्गमाराधयतीत्यर्थः, श्रुतशब्देन ज्ञानदर्शनयोः संगृहीतत्वात्, न हि मिथ्यादृष्टिर्विज्ञातधर्मा तत्त्वतो भवति । एतेन समुदितयोः शीलश्रुतयोः श्रेयस्त्वमुक्तमिति" ॥ १८ ॥

अत्र प्रथमभङ्गस्वामिनं भगवतीवृत्त्यनुसारेणैव स्वयं विवृण्वन्नन्यमतं दूषयितुमुपन्यस्यति—

**पढमो बालतवस्सी गियत्थणिस्सिओ व अग्गीओ ।**
**अण्णे भणंति लिंगी समग्गमुणिमग्गकिरियधरो ॥ १९ ॥**

पढमोत्ति । प्रथमः प्रथमभङ्गस्वामी ज्ञानदर्शनरहितः क्रियापरश्च देशाराधकत्वेनाधिकृतो बालतपस्वी परतन्त्रोक्तमुमुक्षुजनोचिताचारवान् वृत्तिकृन्मते । गीतार्थनिश्रितोऽगीतः—पदैकदेशे पदसमुदायोपचारादगीतार्थो वाऽन्येषामाचार्याणां मते । अस्मिंश्च सांप्रदायिकमतद्वये नातिभेद इत्यग्रे दर्शयिष्यते । अन्ये—संप्रदायबाह्या भणन्ति—लिङ्गी—केवललिङ्गभृत् समग्रमुनिमार्गक्रियाधरो मिथ्यादृष्टिरेव सन् कुतश्चिन्निमित्तादङ्गीकृतजिनोक्तसाधुसामाचारीपरिपालनपरायणो देशाराधकः प्रथमभङ्गस्वामीति । अयमेषामाशयः—शाक्यादिमार्गस्थः शीलवानपि न देशाराधकः, प्रतिपन्नतदनुष्ठानासेवनेन जिनाज्ञाया विराधकत्वम्, तदनुष्ठानकरणेनैव जिनाज्ञाया आराधकत्वमिति नियमात् शाक्यादिमार्गानुष्ठानस्य जिनाहितत्वात् तदङ्गीकृत्यापि तत्करणाकरणाभ्यां जिनाज्ञाराधनविराधनयोरभावात्, अन्यथा तत्तदनुष्ठानत्याजनेन जैनमार्गानुष्ठानव्यवस्थापनानुपपत्तेरसमञ्जसत्वप्रसङ्गात् । किं च—मिथ्यादृष्टीनां ज्ञानस्याप्यज्ञानत्वेनैव तत्सामान्यपालितशीलस्याप्यशीलत्वेन प्रज्ञप्तत्वादन्यमार्गस्थानां शीलवत्त्वमेव नेति कुतस्तेषां देशाराधकत्वम् ? । अन्यभिक्षवो हि जीवाद्यास्तिक्यरहिताः सर्वथाऽचारित्रिण एवेति । "संति एगेहिं भिक्खुहिं गारत्था संजमुत्तरा॰" इत्यादि बहुग्रन्थप्रसिद्धम्, अन्यथाऽन्यतीर्थिकाभिमतदेवादयोऽपि देवत्वादिना स्युरा-

प्रथमो बालतपस्वी गीतार्थनिश्रितो वाऽगीतः ।
अन्ये भणन्ति लिङ्गी समग्रमुनिमार्गक्रियाधरः ॥ १९ ॥

१ सन्ति एके भिक्षवो गारवार्थाः संयमोत्तराः॰ ॥

गन्तव्याः प्रसज्येरन्, मोक्षमार्गभूतशीलस्योपदिष्टत्वात्। तस्माद् भव्या अभव्याश्च निखिलजैनसामाचार्यनुष्ठानयुक्ता मिथ्यादृष्टय एव देशाराधका ग्राह्याः, तेषां द्रव्यशीलस्यापि मार्गपतितत्वेन व्यवहारनयापेक्षया प्रशस्तत्वाद्। अत एवाराधकानां सतामेतेषां नवमग्रैवेयकं यावदुपपातो न विरुद्धः, अखण्डसामाचारीपरिपालनबलेन तत्रोत्पादात्। यदागमः—"अहं भंते असंजयभविअदव्वदेवाणं...यावत्—जहण्णेणं भवणवासीसु उक्कोसेण उवरिमगेविज्जएसुं" त्ति भ० श० २३२ वृत्त्येकदेशो यथा—"तस्मान्मिथ्यादृष्टय एव भव्या अभव्याश्चासंयतभव्यद्रव्यदेवाः श्रमणगुणधारिणो निखिलसामाचार्यनुष्ठाने युक्ता द्रव्यलिङ्गधारिणो गृह्यन्ते। ते ह्यखिलसामाचारीप्रभावत एवोपरितनग्रैवेयकेषूत्पद्यन्ते, असंयताश्च सत्यप्यनुष्ठाने चारित्रपरिणामशून्यत्वादिति"। इत्थं चैतदङ्गीकर्तव्यम्—जिनोक्तमनुष्ठानमन्तरेणाराधकत्वाभावाद् मिथ्यादृष्टित्वमन्तरेण बालतपस्वित्वाभावाच्चेति ॥१९॥

एतन्मतं दूषयति—

**तं मिच्छा, जं फलओ मुक्खं आराहगत्तमिह पगयं।**
**तं च ण एगंतेणं किरियाए भावसुन्नाए ॥२०॥**

तन्मिथ्येति। तत्संप्रदायवाद्युक्तं मतं मिथ्या, यद् यस्मादिह प्रकृतचतुर्भङ्गीप्रतिपादकभगवतीसूत्रे मुख्यं मोक्षानुकूलमाराधकत्वं प्रकृतम्, ज्ञान-क्रियान्यतरमोक्षकारणवादिनामन्यतीर्थिकानां मतनिरासार्थं तत्समुच्चयवादं विशदीकरणार्थं तत्सूत्रप्रवृत्तेः। प्रत्येकं ज्ञानक्रिययोः स्वल्पसामर्थ्यस्य समुदितयोश्च तयोः सम्पूर्णसामर्थ्यस्य प्रदर्शनार्थं देशाराधकादिचतुर्भङ्ग्युपन्यासस्य सार्थकयात्, प्रत्येकं स्वल्पसामर्थ्यस्याभावे च सिकतासमुदायात्तैलस्येव तत्समुदायादपि मोक्षस्यानुपपत्तेः। तदिदमाहाक्षेपसमाधानपूर्वं भाष्यकारः—

१ अथ भगवन्! असंयतभव्यद्रव्यदेवानां यावत् जघन्येन भवनवासिषु, उत्कर्षेणोपरितनग्रैवेयकेषु इति ॥

तन्मिथ्या, यत्फलतो मुख्यमाराधकत्वमिह प्रकृतम्।
तच्च नैकान्तेन क्रियया भावशून्यया ॥ २० ॥

"पत्तेयमभावाओ णिव्वाणं समुदियासु ण जुत्तं ।
नाणकिरियासु वोत्तुं सिकतासमुदाये तेल्लं व ॥
वीसुं ण सव्वह च्चिय सिकतातेल्लं व साहणाभावो ।
देसोवगारिया जा समवायंमि संपुण्णा ॥"

अग्रिमगाथार्थो यथा—न च विष्वक् पृथक् सर्वथैव सिकताकणानां तैल इव साध्ये ज्ञानक्रिययोर्मोक्षं प्रति साधनत्वाभावः, किन्तु या च यावती च तयोर्मोक्षं प्रति देशोपकारिता प्रत्येकावस्थायामप्यस्ति सा च समुदाये संपूर्णा भवत्येतावान् विशेषः, अतः संयोग एव ज्ञान-क्रिययोः कार्यसिद्धिरिति ॥

तच्च मुख्यमाराधकत्वमसंयतभव्यद्रव्यदेवानामेकान्तेन भावशू-न्यया क्रियया न संभवतीति । यदि च देशाराधकत्वमभ्युदयापेक्षया व्याख्येयं तदा सर्वाराधकत्वमप्यभ्युदयापेक्षयैव पर्यवस्येदिति न का-चित्प्रयोजनसिद्धिः, प्रत्युत प्रत्येकपक्षविशेषसंघटनानुपपत्तिः । किं च-'शीलवान् श्रुतवान् देशाराधकः' इत्यत्र योग्यताबलादपि मार्गानुसारी बालतपस्व्येव गृहीतुं युज्यते नान्यः, तद्गतभावशून्यक्रियायाः समुदा-यादेशत्वादपुनर्बन्धकादिक्रियायामेव मोक्षसमुचितशक्तिसमर्थनात्, अनुपचितशक्तिकोपादानकारणस्यैव देशत्वेन शास्त्रे व्यवहारात्, अत एव मृद्द्रव्यमेव घटदेशो न तु तन्त्वादिर्दण्डादिर्वा । मोक्षोपा-दानत्वं च क्रियायां योगवत्तायामुपयोगवत्तायां चेत्यन्यदेतत् ॥ २० ॥

अमुख्याराधकत्वाङ्गीकारेऽपि दोषान्तरमाह—

**जइणीए किरियाए दव्वेणाराहगत्तपक्खे य ।**
**सव्वाराहगभावो होज्ज अभव्वाइलिङ्गीणं ॥ २१ ॥**

---

प्रत्येकमभावाद् निर्वाणं समुदितयोर्न युक्तम् ।
ज्ञानक्रिययोर्वक्तुं सिकतासमुदाये तैलमिव ॥
विष्वग् न सर्वथैव सिकतातैलमिव साधनाभावः ।
देशोपकारिता या समवाये संपूर्णा ॥

---

जैन्या क्रियया द्रव्येणाराधकत्वपक्षे च ।
सर्वाराधकभावो भवेद् अभव्यादिद्रव्यलिङ्गिनाम् ॥ २१ ॥

जइणीए' त्ति । जैन्या क्रियया निखिलसाधुसामाचार्यनुष्ठानरूपया द्रव्येणाराधकत्वपक्षे च देशाराधकत्वाभ्युपगमे चाभव्यादिलिङ्गिनामभव्यादीनां द्रव्यलिङ्गधारिणां सर्वाराधकभावो भवेत्, कुतोऽपि प्रयोजनात्तेषां निखिलसाधुसामाचारीग्रहणे तस्याः पञ्चाररूपत्वाद्, द्रव्यतश्चारित्रस्येव द्रव्यतो ज्ञानदर्शनयोरप्याराधकत्वस्य तेषां बलादुपनिपातात्। न हि ते सम्यक्त्वांशेऽनाराधका एव चारित्रांशे त्वाराधका इत्यर्धजरतीयन्यायाश्रयणं प्रेक्षावतां घटते। सम्यक्त्वांशे भावतः सम्यक्त्वाभावेनोत्सूत्रभाषण-व्रतभङ्गाद्यभावेन चाराधकविराधकस्वभावाभावादनाराधकत्वस्येव चारित्रांशेऽपि भावतश्चारित्राभावेन प्राणातिपातादिव्रतभङ्गाद्यभावेन चाराधकविराधकस्वभावाभावादनाराधकत्वस्याविशेषाद् द्रव्यतश्चोभयाराधकत्वाविशेषादिति। यत्तु तेषां द्रव्यतोऽपि स्वेच्छाविशेषाद् व्रतांशस्यैव ग्रहणं न तु श्रद्धानांश इति परस्य मतम्, तदुन्मत्तप्रलपितम्, अखण्डसामाचारीपालनबलेनैव तेषां ग्रैवेयकोत्पादाभिधानादिति ॥ २१ ॥

दोषान्तरमप्याह—

**तह णिण्हवाण देसाराहगभावो अवट्ठिओ हुज्जा ।**
**तो परिभासा जुत्ता वित्तिं परिगिज्झ वुत्तुं जे ॥२२॥**

'तह' त्ति । तथेति दोषान्तरसमुच्चये। एकान्तद्रव्यक्रिययैवाराधकत्वाभ्युपगमे निह्नवानामभिनिवेशादिना परित्यक्तरत्नत्रयाणां सर्वविराधकत्वकालेऽपि देशाराधकत्वाभावो भवेद्। यथा प्रतिज्ञातद्रव्यक्रियया अपरित्यक्तत्वादिष्टापत्तौ को दोषः? इति चेद्, व्यवहारविरोध एव, न हि सर्वविराधको देशाराधकश्च कोऽपि व्यवह्रियते। अथ द्रव्यक्रियामाश्रित्यैवाराधकत्व-विराधकत्वव्यवस्थाकरणात्सर्वविराधकत्वं निह्नवानां नेष्यत एव, प्रतिपन्नचारित्रविषयकद्रव्याज्ञाभङ्गाभावादेशाराधकत्वम्, उत्सूत्रभाषणेन सम्यक्त्वविषयकप्रतिपन्नजिनाज्ञापरित्या-

---

तथा निह्नवानां देशाराधकभावोऽवस्थितो भवेत् ।
ततः परिभाषा युक्ता वृत्तिं परिगृह्य वक्तुं हि ॥ २२ ॥

गादेशविराधकत्वं चाविरुद्धमेव, अंशभेदादेकत्रैव सप्रतिपक्षोभयधर्मसमावेशाविरोधादिति चेद् । न, एवं सत्यसंयतभव्यद्रव्यदेवानां निह्नवानामभव्यादीनां चोपपत्तिमधिकृत्य साम्याभावप्रसङ्गात् । अथ नास्त्येव तेषामुपपातसाम्यम्, ग्रैवेयकेष्वपि निह्नवस्य देवदुर्गतितयोत्पादाद् । देवदुर्गतत्वं च न केवलं देवकिल्बिषिकत्वादेनैव, तत्र तेषामभावाद्, किन्तु संमोहत्वेन । स च देवदुर्गतस्ततश्च्युतोऽनन्तकालं संसारे परिभ्रमति । यदागमः—

"[1]कंदप्पदेवकिल्बिसअभिओगा आसुरी य संमोहा ।
तो देवदुग्गईओ मरणंमि विराहिआ हुंति ॥ "त्ति ।

आतुरप्रत्याख्यानप्रकीर्णके व्याख्यादेशो यथा—" संमोह'त्ति संमोहयन्ति-उन्मार्गदेशनादिना मोक्षमार्गाद् भ्रंशयन्ति ये ते संमोहाः, संयता अप्येवंविधा देवत्वेनोत्पन्ना संमोहा एवं रूपा दुर्गतिः, ता एव देवदुर्गतयो मरणाऽपध्यानादिना विराधिता भवन्ति, ततश्च्युता अनन्तसंसारं परिभ्रमन्तीति चेद् । न, अभव्यादीनामप्यकालवचनौषधप्रयोगात् प्राप्तग्रैवेयकोत्पादानां संमोहप्राबल्येन लुप्तसुखानां देवदुर्गतत्वाविशेषाद् । उक्तं चोपदेशपदे—

" कह णु अकालपओगे इत्तो गेविज्जगाइ सुहसिद्धी ।
णणु साहिगओसहजोगसोक्खतुल्ला मुणेयव्वा ॥ १ ॥
कुणइ इह संणिताए सदोसहजोगसुक्खमित्तं तु ।
तह एयं विण्णेयं अणोरपारंमि संसारे ॥ २ ॥
ण य तत्तओ तयंपि हु सुक्खं मिच्छत्तमोहिअमइस्स ।
जह रोद्दवाहिगहिअस्स ओसहदेवे य तब्भावे ॥ ३ ॥

१ कन्दर्पदेव-किल्बिषाभियोगा आसुरी च संमोहाः ।
ता देवदुर्गतयो मरणे विराधिता भवन्ति ॥
कथं न्वकालप्रयोगे इतो ग्रैवेयकादिसुखसिद्धिः ।
ननु साधिकौषधयोगसौख्यतुल्या ज्ञातव्या ॥ १ ॥
करोतीह संज्ञितया सदौषधयोगसौख्यमात्रं तु ।
तथैतद् विज्ञेयं अनवारपारे संसारे ॥ २ ॥
न च तत्त्वतस्तदपि खलु सौख्यं मिथ्यात्वमोहितमतेः ।
यथा रोद्रव्याधिगृहीतस्य..........................

जह चेवोवहयनयणो सम्मं रूवं ण पासइ पुरिसो ।
तह चेव मिच्छदिट्ठी विउलं सुक्खं ण पावेइ ॥ ४ ॥
असदभिणिवेसवसो णिओगओ ताण तत्तओ भोगो ।
सव्वत्थ तदुवघायावि सघारियजोगतुल्लोत्ति ॥ ५ ॥

एतस्माद्धि वचनादभव्यादीनामेव निह्नवाद्यपेक्षयाऽप्यकालवचनौषधप्रयोगेण मिथ्याभिनिवेशदार्ढ्यादतिदुःखितत्वेन क्लिष्टतरदेवदुर्गत्वं प्रतीयते, परेण त्वभव्यनिह्नवानामनाराधकत्वविराधकत्वाभ्यां वैपरीत्यमङ्गीकृतं प्रसज्यते च तत्प्रक्रियया द्रव्याज्ञापेक्षयाऽभव्यादीनामपि सर्वाराधकत्वात् तात्त्विकसुदेवत्वमेवेति यत्किंचिदेतत् ।

अथ चारित्रापेक्षयाऽऽराधकत्वं द्रव्यप्रतिपत्त्यैव परिभाष्यते, ज्ञानदर्शनापेक्षया तु भावप्रतिपत्त्या ततोऽभव्यादीनां द्रव्यलिङ्गिनां देशाराधकत्वमेव । निह्नवानां च देशाराधकत्वं देशविराधकत्वं च ततो देशाराधकत्वापेक्षयोभयोपपातसाम्यं दुर्गतित्वनिबन्धनं चैकस्य साहजिकं मिथ्यात्वम्, अपरस्य च विराधनाजन्यमिति परिभाषायां को दोषः ? इति चेद्, नन्वेवं परिभाषाश्रयणावश्यकत्वे वृत्तिकृत्स्वारस्येनैव साऽऽश्रयणीया इत्यभिप्रायवानाह–तत् तस्माद्वृत्तिं परिगृह्य परिभाषा वक्तुं युक्ता । 'जे' इति पादपूरणार्थो निपातः । वृत्तौ हि श्रुतशब्देन ज्ञानदर्शनयोः शीलशब्देन च प्राणातिपातादिक्रियाया एव परिभाषणाद् । अश्रुतवान् शीलवांश्च मार्गानुसार्येव बालतपस्वी पर्यवस्यतीति भावः । नहि द्रव्यलिङ्गधरोऽभव्यादिर्व्यवहारेण बालतपस्वी वक्तुं युज्यते । "तो एते बालतवस्सिणो दट्ठव्वेत्ति" महानिशीथे नागिलवचनं कुशीलेषु बालनिश्चयाभिप्रायकमेवाति । न चैकस्मिन्नेव वाक्ये देशाराधकत्वमशुद्धव्यवहारात्, तदुपपादकं बालतपस्वित्वं च निश्चयादिति वक्तुं युक्तम्, संदर्भविरोधात्, किन्तु निश्चयप्रायका-

यथैवोपहतनयनो सम्यग् रूपं न पश्यति पुरुषः ।
तथैव मिथ्यादृष्टिर्विपुलं सौख्यं न प्राप्नोति ॥ ४ ॥
असदभिनिवेशवशो नियोगतस्तेषां तत्त्वतो भोगः ।
सर्वत्र तदुपघातादपि..........योगतुल्य इति ॥ ५ ॥

१ तत एते बालतपस्विनो द्रष्टव्या इति ।

द्व्यवहाराद्देशाराधकत्वं तदुपपादकं च मार्गानुसारियमनियमादिक्रि-
याणां सत्त्वमित्येवं संदर्भाविरोधः । न च व्यवहारे निश्चये
वा सम्यक्त्वाभावमिथ्यात्वाभ्यां विशेषः शास्त्रासिद्ध इति व्यामूढधिया शङ्क-
नीयम्, योगबिन्दूपदेशपदादावेतद्विशेषप्रसिद्धेः । नन्वस्यामपि परि-
भाषायां कथं बालतपस्विनो देशाराधकत्वम्, तद्गतमार्गानुसारिक्रि-
यया अपि मोक्षमार्गत्वाभावात्, तद्देशचारित्रक्रियाया एवांशत्वादिति
चेत् । न, संग्रहनयादेशादनुयोगद्वारसिद्धप्रदेशदृष्टान्तेन स्वदेशदेश-
स्यापि स्वदेशत्वाविरोधादिति सूक्ष्ममीक्षणीयम् ॥ २२ ॥

नन्वन्यमार्गस्थशीलादिक्रियाया अपि जैनमार्गानुष्ठानत्वाभावा-
त्कथं तया देशाराधकत्वम् ? इत्यत्राह—

**मग्गाणुसारिकिरिया जइणिच्चिय भावओ उ सव्वत्थ ।**
**जेणं जिणोवएसो चित्तो अपमायसारोवि ॥ २३ ॥**

'मग्गाणुसारिकिरिय'त्ति । मार्गानुसारिणी क्रिया शीलदयादा-
नादिरूपा सर्वत्र भावतस्तु जैन्येव, आदितो भगवत्प्रणीताया एव
तस्याः सर्वत्रोपनिबन्धात्, मार्गानुसारिणां च तन्मात्र एव तात्पर्यात् ।
ते हि क्षीरनीरविवेककृतो हंसा इव निसर्गत एव शुद्धाशुद्धक्रियावि-
शेषग्राहिण इति कथमयं जनः ? इत्यत्र हेतुमाह—यद्—यस्माद् अप्र-
मादसारोऽपि परमोपेयाप्रमादमुख्योद्देशोऽपि जिनोपदेशः चित्रः—पुरुष-
विशेषापेक्षयोचितगुणाधायकतया नानाप्रकारो यो यत्प्रमाणोपदेशयो-
ग्यस्तस्य तावत्प्रमाणगुणाधानपर्यवसन्न इति यावत् । तदुक्तमुपदेशपदे

एवं जिणोवएसो उचियावेक्खाइ चित्तरूवोत्ति ।
अपमायसारया ए वि तो सविसओ मुणेयव्वो ॥ १ ॥

---

मार्गानुसारिक्रिया जैन्येव भावतस्तु सर्वत्र ।
येन जिनोपदेशश्चित्रोऽप्रमादसारोऽपि ॥ २३ ॥

---

१ एवं जिनोपदेश उचितापेक्षया चित्ररूप इति ।
अप्रमादसारतायामपि ततः स्वविषयो ज्ञातव्यः ॥

एतद्वृत्तिर्यथा—"एवं गुरुकर्मणां प्रव्रज्याप्रतिपत्त्यसहिष्णुत्वे सति जिनोपदेशः—तत्तद्गुणप्रज्ञापनारूप उचितापेक्षया यो यत्प्रामाणस्योपदेशस्य योग्यस्तदपेक्षया चित्ररूपो नानारूपतया प्रवर्तते इति प्राग्वत् । अप्रमादसारतायामपि अप्रमादः सारः करणीयतया यत्र जिनोपदेशे स तथा तस्य भावस्तत्ता, तस्यामपि तत् तस्मात् सविषयः सगोचरो 'हुणेयव्वो'त्ति मुणितव्यः ।"

यदा हि जिनोपदेशश्चित्ररूपतया व्यवस्थितोऽप्रमादसारोऽपि तदाऽपुनर्बन्धकादी निर्वाणमार्गप्रज्ञापनायोग्यानधिकृत्य केचित्सामान्यदेशनायाः, केचित्सम्यग्दृष्टिगुणयोग्यप्रज्ञापनायाः, केचिद्देशविरतिगुणस्थानार्हप्ररूपणायाः, केचिन्निर्वृत्तचारित्रमोहमालिन्या अप्रमत्ततारूपप्रव्रज्यादेशनाया योग्या इति नाऽविषयाऽप्रमत्तताप्रज्ञापनेति । ततश्च मार्गानुसारिक्रियाऽपि भगवत्सामान्यदेशनार्थ इति भावतो जैन्येवेति प्रतिपत्तव्यम् ॥ २३ ॥

नन्वेवं भागवतीं सामान्यदेशनामनुसृत्य प्रवर्तमानानां मिथ्यादृशामपि सा मार्गानुसारिणी क्रिया सिद्ध्यनुदयादानादिका जैनी, पतञ्जल्याद्युक्तमनुसृत्य प्रवर्तमानानां तु सा कथं जैनी? जिनदेशनाऽनुसंधानमूलप्रवृत्त्यनुपहितत्वादित्याशङ्कायामाह—

**अण्णत्थावि जमभिण्णं अत्थपयं तं जिणिंदसुअमूलं ।**
**अण्णोवि तयणुसारी तो देसाराहगो जुत्तो ॥ २४ ॥**

'अण्णत्थवि'त्ति । अन्यत्रापि पातञ्जलादिशास्त्रेऽपि यदर्थपदं पुरुषार्थोपयोगिवचनम् अभिन्नं-भगवद्वचनैकार्थं तज्जिनेन्द्रश्रुतमूलम्, तदनुसारेणैव तत्र तदुपनिबन्धात् । तथा च ततोऽपि जायमाना मार्गानुसारिणी क्रिया वस्तुतो भगवद्देशनाविषयत्वेन भावतो जैन्येव । न हि मध्यस्थस्यान्योक्तत्त्वज्ञानं तत्फलप्रतिबन्धकम्, दृष्टिरागसहकृतस्यैव तस्य तथात्वात् । अत एव नाभिन्नार्थेऽन्योक्तत्वमात्रेण सर्वनय-

---

अन्यत्रापि यदभिन्नमर्थपदं तज्जिनेन्द्रश्रुतमूलम् ।
अन्योऽपि तदनुसारी ततो देशाराधको युक्तः ॥ २४ ॥

वादसंग्रहहेतुचिन्ताज्ञानापादने माध्यस्थगुणानां साधुश्रावकाणां प्रद्वेषः, तत्प्रद्वेषस्य तन्मूलदृष्टिवादप्रद्वेषमूलत्वेन महापापत्वात् । तदुक्तमुपदेशपदसूत्रवृत्त्योः—

> " [1]जं अत्थओ अभिन्नं अण्णत्था सद्दओ वि तह चेव ।
> तंमि पओसो मोहा विसेसओ जिणमयठिआणं ॥ "

यद्वाक्यमर्थतो वचनभेदेऽप्यर्थमपेक्ष्याभिन्नमेकाभिप्रायम्, तथा अन्वर्थाद् अनुगतार्थाच्छब्दतोऽपि शब्दसंदर्भमपेक्ष्य तथैव-अभिन्नमेव । इह परसमये द्विधा वाक्यान्युपलभ्यन्ते । कानिचिदर्थेन एवाभिन्नानि—

> " अप्पा नई वेयरणी अप्पा मे कूडसामली ।
> अप्पा कामदुहा धेणू अप्पा मे नंदणं वणं ॥ "—

इत्यादिभिरार्षवाक्यैर्यथा भारतोक्तानि—

> " इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ ।
> निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥
> आपदां प्रथितः पन्था इन्द्रियाणामसंयमः ।
> तज्जयः संपदामार्गो येनेष्टं तेन गम्यताम् ॥ " इत्यादीनि ।

कानिचिच्छब्दतोऽर्थतश्च—" जीवदया सच्चवयणं "—इत्यादिभिः प्रागुक्तैरेव वाक्यैः सह यथा—

> " पञ्चैतानि पवित्राणि सर्वेषां धर्मचारिणाम् ।
> अहिंसा सत्यमस्तेयं त्यागो मैथुनवर्जनम् ॥ " इत्यादीनि ।

एवं स्थिते तस्मिन्नभिन्नार्थेऽक्षरणनियमाद्वा वाक्ये विशिष्टक्षयोपशमादिवाक्येन सह प्रद्वेषः—' परसमयप्रज्ञापनीयम् ' इतीर्ष्या मोहो मूढतालक्षणो वर्तते बौद्धादिसामान्यधार्मिकजनस्यापि विशेषतो जिनमतस्थितानां सर्वनयवादसंग्रहान्मध्यस्थभावभावितहृदयानां साधुश्रावकाणाम् "। अत एवान्यत्राप्यनेनोक्तम्—

---

१ यदर्थतोऽभिन्नमन्वर्थाच्छब्दतोऽपि तथा चैव ।
तस्मिन्प्रद्वेषो मोहाद् विशेषतो जिनमतस्थितानाम् ॥

२ आत्मा नदी वैतरणी आत्मा मे कूटशाल्मली ।
आत्मा कामदुघा धेनुरात्मा मे नन्दनं वनम् ॥

३ जीवदया सत्यवचनम् ॥

"गुणतस्तत्त्वे तुल्ये संज्ञाभेदागमान्यथादृष्टिः ।
भवति यतोऽसावधमो दोषः खलु दृष्टिसंमोहः ॥" इति

एतत्सर्वं समर्थयन्नाह—

"सव्वप्पवायमूलं दुवालसंगं जओ समक्खायं ।
रयणागरतुल्लं खलु तो सव्वं सुंदरं तंमि ॥"

सर्वप्रवादमूलं—भिक्षु-कणभक्षाक्षपादादितीर्थान्तरीयदर्शनप्रज्ञापनानामादि-कारणम् । किं तद् ? इत्याह—द्वादशाङ्गं—द्वादशानामाचारादीनामङ्गानां प्रवचन-पुरुषावयवभूतानां समाहारो यतः कारणात्समाख्यातं सम्यक् प्रज्ञप्तम् । सिद्ध-सेनदीवाकरादिभिर्यतः पठ्यते—

"उदधाविव सर्वसिन्धवः समुदीर्णास्त्वयि नाथ ! दृष्टयः ।
न च तासु भवान् प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधिः ॥"

अत एव रत्नाकरतुल्यं-क्षीरोदधिप्रभृतिजलनिधिनिभम्, खलु निश्चये, तत्तस्मात् सर्वमपरिशेषसुन्दरं यत्किंचित्प्रवादान्तरेषु समुपलभ्यते तत्तत्र समव-तारणीयम् ।

इत्यकरणनियमादीन्यपि वाक्यानि तेषु तेषु योगशास्त्रेषु व्यास-कपिलातीतपतञ्जल्यादीनि प्रणीतानि जिनवचनमहोदधिमध्यलब्धा-न्यान्येव दृश्यानीति । तेषामवज्ञाकरणे सकलदुःखमूलभूताया भग-वदवज्ञायाः प्रसङ्गात् न काचित्कल्याणसिद्धिरिति ।

यत्तु कश्चिदाह—"जैनानामकरणनियमपरिहारशङ्कानिरासार्थमेव तीर्था-न्तरीयवर्णितत्वमुपवर्णितं नत्वन्यतीर्थिकेष्वकरणनियमोऽस्तीति भणितम् । वर्णनं च वर्णनीयवस्तुविषयकयथार्थज्ञानसापेक्षमेव, अन्यथा च तथा-भूतवर्णनं सम्यगेव स्यात्, तथा च तद्दर्शनेऽपि धर्मसद्भावप्रसङ्गः । इत्थं च कपिलस्य पुरस्तान्मनागिहापि धर्मोऽस्तीति परिव्राजकदर्शन-मधिकृत्य मरीचिवचनमुत्सूत्रं न स्यादिति । तदसत्, तीर्थान्तरीयाणा-

---

१ सर्वप्रवादमूलं द्वादशाङ्गं यतः समाख्यातम् ।
रत्नाकरतुल्यं खलु ततः सर्वं सुन्दरं तस्मिन् ॥

मपि सद्भूताकरणनियमवर्णनस्य शुभभावविशेषसापेक्षत्वेन मार्गानुसारितया तेषु सामान्यधर्मसिद्धेः। शुभभावविशेषसापेक्षत्वं च तस्य

"इत्तो अकरणनियमो अण्णेहिवि वण्णिओ ससत्थंमि।
सुहभावविसेसाओ ण चेवमेसो ण जुत्तोत्ति ॥" इति

उपदेशपदवचनेनैव प्रसिद्धम्। न चैवंविधस्तेषां शुभाध्यवसायस्तथाभूतमोहनीयक्षयोपशमजनितत्वेन स्वयमेवोक्तो निरनुबन्धशुभप्रकृतिहेतुत्वादनर्थहेतुरेवेति परेण वक्तुं युक्तम्। निरुपधिभवबीजप्रहाणेच्छागोचरमार्गानुसारिशुभाध्यवसायस्य शुभानुबन्धिपुण्यनिमित्तत्वेनोक्तत्वात्। तदुक्तमपुनर्बन्धकाधिकारे योगबिन्दौ—

"क्रोधाद्यबाधितः शान्त उदात्तस्तु महाशयः।
शुभानुबन्धिपुण्याच्च विशिष्टमतिसंगतः॥
ऊहते यमतः प्रायो भवबीजादिगोचरम्।
कान्तादिगतगेयादि तथा भोगीव सुन्दरम्॥" इति।

अत एव परेषामकरणनियमवर्णने हेतुः शुभभावविशेषो ग्रन्थिभेदाभिमुखः प्रशस्तपरिणामभेद उपदेशपदवृत्तौ विवृतः। अयमेव ह्यस्य विशेषो यद्विशेषदेशनाप्रतिसंधानं विनाऽपि तद्विशेषपर्यवसायित्वमिति। अत एव मार्गानुसारिणां परेषां जैनाभिमतप्रकारेण जीवाद्यनभ्युपगमात्र नास्तिकत्वम्, विप्रतिपत्तौ पक्षपातपरित्यागे सति वस्तुतस्तदभ्युपगमपर्यवसानात्। अत एव शुभभावविशेषादकरणनियमवर्णनं मार्गानुसारिणामेव यदृच्छाप्रणयनप्रवृत्तानामर्वाचीनानां च प्रवाहपतितत्वेन घुणाक्षरन्यायेनैवेति जिनवचनविषयकपरोपनिबन्धेऽप्यस्ति विशेषः। तदिदमुक्तं धर्मबिन्दुवृत्तौ—"यच्च यदृच्छाप्रणयनप्रवृत्तेषु तीर्थान्तरीयेषु रागादिमत्स्वपि घुणाक्षरोत्किरणव्यवहारेण क्वचित्किंचिदविरुद्धमपि वचनमुपलभ्यते मार्गानुसारिबुद्धौ वा प्राणिनि क्वचित् तदपि जिनप्रणीतमेव, तन्मूलत्वात्तस्येति। एतेन घुणाक्षरन्यायेन जैनाभिमतवस्तुवर्णनानुकारि वर्णनमन्यतीर्थिकेषु भवत्यपीति

---

१ इतोऽकरणनियमोऽन्यैरपि वर्णितः स्वशास्त्रे।
शुभभावविशेषात् न चैवमेष न युक्त इति॥

प्रवचने प्रतीतमेवेति तेषामकरणनियमवचनमाकृतिमात्रमेवेत्यपास्तम् । मार्गानुसारिदृष्ट्या तद्गुणनस्य घुणाक्षरविलक्षणत्वाद्, औदयिकयोगदृष्ट्या अर्थविशेषावगाहिसम्यक्त्वाभावेऽपि सामान्यधर्मप्रदर्शनाविरोधात्, सामान्यधर्मसत्ता च तेषु बौद्धादिसामान्यधार्मिकजनस्यापीति वदत उपदेशपदवृत्तिकर्तुरेव वचनाद् व्यक्तं प्रतीयते । एवं 'सति मनागिहापि धर्मोऽस्तीति मरीचिवचनस्योत्सूत्रत्वं न स्यादिति त्वसमीक्षिताभिधानम्, स्वतन्त्रप्रमाणप्रतिपत्त्यनुबन्धिविषयतयाऽन्यदर्शने मनाग् धर्मस्याप्यभावेन तद्वचनस्योत्सूत्रत्वात्, तद्वृत्तिसामान्यधर्मेऽपि भगवद्वचनस्यैव स्वतन्त्रप्रमाणत्वाद् । अथवा कापिलस्य बालस्याद्यन्यलिङ्गमेवान्यदर्शनत्वेन तेन प्रतीतम्, तत्र च स्वाभिरुचितकारणताविशेषेण न कोऽपि धर्मोऽस्तीति भावासत्यत्वात् तद्वचनस्योत्सूत्रत्वाव्याघात इति यथातन्त्रं विभावनीयम् ।

अथैवमन्यदर्शने क्वचित्सत्यत्वम्, क्वचिच्चासत्यत्वमिति मिश्रत्वं स्याद् नत्वेकान्तमिथ्यात्वम्, न चैवमिष्यते, तस्यैकान्तमिथ्यारूपस्यैवाभ्युपगमात् । तदुक्तं दशवैकालिकनिर्युक्तौ—

"सम्मदिट्ठीउ सुअंमि अणुवउत्तो अहेउअं चेव ।
जं भासइ सा मोसा मिच्छद्दिट्ठीवि य तहेवत्ति ॥" [1]

एतद्वृत्तिर्यथा—सम्यग्दृष्टिरेव श्रुते आगमेऽनुपयुक्तः प्रमादाद् यत्किंचिदहेतुकं चैव युक्तिविकलं चैव भाषते 'तन्तुभ्यः पट एव भवति' इत्यादि, सा मृषा, विज्ञानादेरपि तत एव भावादिति । मिथ्यादृष्टिरपि तथैवोपयुक्तोऽनुपयुक्तो वा यद् भाषते सा मृषैव घुणाक्षरन्यायेन संवादेऽपि "सदसतोरविशेषाद् यदृच्छोपलब्धेरुन्मत्तवत्" इति गाथार्थः, इति चेद् । न, अनभिनिविष्टं प्रत्यन्यदर्शनस्य सर्वस्यैव फलतोऽप्रामाण्यात्, मार्गानुसारिणं प्रति च सुन्दरवचनस्य जैनवचनपर्यवसिततयाऽवशिष्टस्यान्यदर्शनस्यैकान्तमिथ्यात्वतादवस्थ्यात् ।

कश्चित्तु दृढदृष्टिरागाविलुप्तबुद्धिः पातअलादिगताकरणनियमादिवाक्यानां जिनवचनमूलत्वमनभिमन्यमानः "सव्वप्पवायमूलं."

---

1 सम्यग्दृष्टिः श्रुतेऽनुपयुक्तोऽहेतुकं चैव ।
यद् भाषते सा मृषा मिथ्यादृष्टिरपीति च तथैवेति ॥

इत्याद्युपदेशपदगाथायामिमामनुपपत्तिमुद्भावयति–' सर्वप्रवादानां मूलं द्वादशाङ्गम् ' इत्यत्र प्रवादा नयवादविशेषास्ते च सर्वग्रहणेन शुभा अशुभाश्च ग्राह्याः । तत्र शुभा जीवरक्षाद्यभिप्रायघटिताः, अशुभाश्च ततो विलक्षणाः तेषां च मूलं द्वादशाङ्गं श्रीवीरवचनाद्बोधितश्री सुधर्मस्वामिसम्बन्धि न भवति , अशुभानामपि प्रवादानां प्रवृत्तेर्जिनवचनमूलकत्वप्रसक्त्या शुभानामिवोपादेयता स्यादिति । ते च प्रवादाः शुभाशुभरूपा अपि संख्यया च न संख्याकाः । तदुक्तम्–" जावइआ वयणपहा०" इत्यादि, तेषां प्रवृत्तिरनादिप्रवाहपतिता कथं जिनवचनमूलिका संभवति ?, प्रत्यक्षव्याघात् । किं च–तेषां सर्वेषामप्यवज्ञाकरणेन जिनावज्ञाऽभ्युपगमे " जीवो हन्तव्यः " इत्यादिनयप्रवादानामप्यवज्ञाकरणे तथात्वापत्तिरिति ॥ एतदुत्तरभावं कल्पयति–द्वादशाङ्गं हि सर्वोत्कृष्टं श्रुतज्ञानं केवलज्ञानदिवाकरस्य प्रकाशभूतं केवलज्ञानमिव प्रत्यात्मप्रवर्तित्वाधिकरणभेदेन भिन्नमपि स्वरूपतो न भिन्नम् , किन्तु केवलज्ञानमिवैकमेव, तुल्यविषयकत्वात् तुल्यसंबन्धित्वाच्च । उदयमधिकृत्य तु स्वरूपतोऽपि भिन्नमेव, तत्कारणस्य क्षयोपशमस्य प्रत्यात्मभिन्नत्वात् , श्रुतज्ञानोदयस्य च क्षायोपशमिकत्वात् । ते च प्रवादा निजद्वादशाङ्गमूलका अपि सामान्यतो द्वादशाङ्गमूलका एवोच्यन्ते । यथा नानाजलसंभूतान्यपि कमलानि सामान्यतो जलजान्येव, अत एव सर्वप्रवादानां मूलं द्वादशाङ्गमेवेति सामान्यतोऽभिहितम् , सर्वस्यापि द्वादशाङ्गस्य सर्वोत्कृष्टश्रुतत्वेन सर्वाक्षरसंनिपातात्मकत्वात् प्रवादा अप्यक्षरात्मका एव । अत एव द्वादशाङ्गं रत्नाकरतुल्यम् , रत्नाकरस्येव तस्याप्यनेकजातीयशुभाशुभनयलक्षणवस्तूनामाश्रयत्वात् । परं मिथ्यादृशां यद् द्वादशाङ्गं तत्स्वरूपत एव सर्वनयात्मकं सत्तामात्रवर्तित्वाद् , न पुनः फलतोऽपि कस्यापि मिथ्यादृशः कदाचिदपि सर्वांशक्षयोपशमाभावात् , मिथ्यादृष्टिमात्रस्योत्कृष्टतोऽपि क्षयोपशमः सर्वांशक्षयोपशमलक्षणसमुद्रापेक्षया बिन्दुकल्पो भवति । यदुक्तं " जयति विजितराग०" इत्यादि । सम्यग्दृशां तु केषांचित्संयतानां फलतोऽपि द्वादशाङ्गस्य सर्वनयात्मकत्वम् , सर्वांशक्षयोपशमस्य संभवात् ।

---

१ यावन्तो वचनपथाः ।

अत एव गौतमादयः सर्वाक्षरसंनिपातिनः प्रवचने भणिताः, परं तेषां संयतानां सकलमपि द्वादशाङ्गं शुभनयात्मकत्वेनैव परिणमति, सावद्यनयाविषयकानुज्ञादिवचनप्रवृत्तेरप्यभावाद् । एतेन सर्वेऽपि शाक्यादिप्रवादा जैनागमसमुद्रसंबन्धिनो बिन्दव इति भ्रान्तिरपि निरस्ता, "षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि" इत्यादि प्रवादानामपि जैनागममूलकत्वापत्त्या संयतानां सावद्यभाषाप्रवृत्तिप्रसक्तेः । तस्मात्सर्वोऽक्षयोपशमसमुत्थद्वादशाङ्गलक्षणसमुद्रस्य पुरस्तादन्यतीर्थिकाभिमतप्रवादाः समुदीता अपि बिन्दूपमा इत्यर्थो युक्तः, अन्यथा 'बिन्दुभावं भजन्ते' इति प्रयोगानुपपत्तिः स्यात् । अवयवावयविनोरुपमानोपमेयभावेन वर्णने निजावयवापेक्षया महत्त्वेऽप्यवयविनो गौरवाभावाद्, नह्यङ्गुष्ठो हस्तावयवभावं भजते इति हस्तस्य स्तुतिः संभवति । किं च–समुद्रस्य बिन्दव इति भणनमप्यसङ्गतम्, समुद्रप्रभवा हि वेलाकल्लोलोर्म्यादयो भवन्ति न पुनर्बिन्दवः, तेषां चोत्पत्तिर्मेघाद् हस्तवस्त्रादिव्यापाराद्वा स्यादिति सर्वानुभवासिद्धम् । अन्यथा समुद्रान्निर्गतबिन्दुभिः समुद्रस्य न्यूनत्वापत्त्या तस्य गाम्भीर्यहानिः स्याद् इत्थंस्थिते वृत्तिव्याख्यानसंगतिरियम्–यद् यस्मात्कारणाद् द्वादशाङ्गं रत्नाकरोपमया शुभाशुभसर्वप्रवादमूलम्, तस्मात्कारणात्स्वरूपतः फलतश्च यावत्सुन्दरमात्मनिष्ठाकरणनियमादिवाच्यवाचकं वाक्यादिकं तत्तस्मिन् द्वादशाङ्गे, एवकारो गम्यः, द्वादशाङ्ग एव समवतारणीयं, तत्र वर्तते एवेत्यर्थः, द्वादशाङ्गस्य सर्वोत्कृष्टश्रुतत्वेन तद्व्यापकभूतस्य सर्वसुन्दरात्मकत्वस्यावश्यंभावात्; परं सम्यग्दृशां यावत्सुन्दरं तावत्सर्वमपि द्वादशाङ्गमूलकमुदितं भवति, फलतोऽपि शुभत्वात्, तदागमनविधिपरिज्ञानाच्च । तच्च सानुबन्धपुण्यप्रकृतिहेतुः । मिथ्यादृशां तु स्वरूपतः क्वचिदंशे शुभत्वेऽपि फलतोऽशुभत्वमेवेति । विरुद्धस्वरूपपरिणतयोरुभयोः सम्यग्मिथ्यादृशारकरणनियमयोरभेदेन भणनमुदितस्याकरणनियमस्यावज्ञया जिनावज्ञा स्यात्, सा चानन्तसंसारहेतुरिति भणितम् । यथा मोक्षाङ्गं स्वरूपतः शुभमपि मनुष्यत्वं संयतजनस्य फलतोऽपि शुभमेव, मोक्षप्राप्तिपर्यन्तं सुगतिहेतुत्वात् । तदेव मनुष्यत्वं व्याधादेः फलतोऽशुभमेव, जीवघाताद्यसंयमहेतुत्वेन दुर्ग-

निर्हेतुत्वात्। एवं सत्यपि भेदे द्वयोरपि मनुष्यत्वयोरतुल्यतया भणनं संयतजनमनुष्यत्वस्यावज्ञया जिनावज्ञैव, जिनेनैव भेदेनाभिधानात् दृश्यते च लोकेऽपि लक्षणोपेत-तदनुपेतयोर्मण्योस्तुल्यतया भणने लक्षणोपेतमणेरवज्ञया तत्परिक्षकस्यावज्ञैवेति ॥ तदिदमखिलमकाण्डतुण्डताण्डवाडम्बरमात्रम्, अनुपपत्तेरेवाभावात्। द्वादशाङ्गस्य विधिनिषेधविधया स्वसमयपरसमयप्रज्ञापनाविधया वाऽशुभाशुभसर्वप्रवादमूलत्वे दोषाभावात्। न चाशुभानामपि प्रवादानां ततः प्रवृत्तेस्तन्मूलकतयोपादेयताप्रसङ्गः, तज्जन्यप्रतिपत्तिविषयत्वरूपस्य तन्मूलकत्वस्योपादेयत्वाप्रयोजकत्वात्, जिनवचनविहितत्वस्यैवोपादेयतायां तन्त्रत्वात्। सर्वेषामपि परवादानामवज्ञाकरणे च न जिनावज्ञाऽभ्युपगम्यते, किन्तु तद्गतसुन्दरप्रवादानामेवेति। 'जीवो हन्तव्यः' इत्यादिनयप्रवादानामवज्ञायां जिनावज्ञाऽऽपादनमसङ्गतमेवेति, ततो भावान्तरकल्पनं निर्मूलकमेवासंगततरं च। अन्योक्ताकरणनियमावज्ञापरिहारार्थं प्रकृतगाथोपन्यासात्परकल्पितभावस्य च तद्विपरीतत्वात् तदनुसारेणोभयाकरणनियमवर्णनाभेदे भगवदवज्ञाप्रसङ्गात्, तद्भेदव्यक्तये अन्याकरणनियमवर्णनावज्ञाया एव न्याय्यत्वप्रसङ्गादिति। तथाऽपि तत्र किञ्चिदुच्यते—द्वादशाङ्गं हि सर्वोत्कृष्टश्रुतज्ञानं सन्तानभेदाविवक्षया गृह्यते, तच्छुद्धज्ञानमेव ज्ञानाज्ञानसाधारणं वा होतस्य सर्वप्रवादमूलत्वानुपपत्तिः, शुद्धाशुद्धयोरैक्यायोगात्। अन्त्ये च संग्रहनयाश्रयणेन द्वादशाङ्गसामान्यस्य वस्तुनः सर्वनयप्रवादात्मकत्वसिद्धावपि व्यक्त्यनुपसंग्रहापत्तिः। न हि यथा नानाजलोत्पन्नानि जलजानि जलजत्वेनोच्यन्ते तथा 'जलं सर्वजलजोत्पादकम्' इत्यपि व्यवहारः क्रियते, एवमेव हि 'सर्वप्रवादमूलं द्वादशाङ्गम्' इत्यपि न स्यात्। यदि चैकवचनेनापि व्यक्त्युपसंग्रहः क्रियते, भेदविवक्षयैव च मिथ्यादृशां द्वादशाङ्गमल्पक्षयोपशमात्मकं सर्वांशक्षयोपशमशुद्धसम्यग्दृष्टिद्वादशाङ्गरत्नाकरापेक्षया बिन्दुतुल्यं व्यवस्थाप्यते, तदा कथं वाचोयुक्तिः ?, 'सर्वेऽपि शाक्यादिप्रवादा जैनागमसमुद्रसंबन्धिनो बिन्दव इति भ्रान्तिः' इति ज्ञानवाक्ययोर्मिथ्यारूपयोरविशिष्टयोरेकत्र जैनागमसंबन्धित्वमपरत्र नेत्यत्र प्रमाणाभावात्, प्रत्युत

